**तद्भाव जिज्ञासितव्यम्" (छा. उ. ८।१।१) इति छान्दोग्य-**

गृह्यते। यत्पदेन च आकाशपदाभिहितं ब्रह्मैव ग्राह्यम्। ततश्च तस्मिन् पुण्डरीके यद् अन्तः अन्तर्गतम् अन्तर्यामिस्वरूपं सदाशिवतत्त्वं तदन्वेष्टव्य-मित्यर्थः।

अन्वेषणमेव बिवृणोति—तद्भाव जिज्ञासितव्यमिति। ज्ञातुमेष्टव्यम्, विचारेण निर्णेतव्यमित्याशयः। उपासनायाः स्वरूपनिर्णयपूर्वकत्वाद् हृत्पुण्डरीके पारमेश्वरं तत्त्वं निश्चित्योपासितव्यमिति तात्पर्यम्। छान्दोग्यवाक्येन चेति। यद्यपि छान्दोग्यवाक्ये शिवासाधारणं किञ्चित्पदं नास्ति, तथापि देवतान्तररूढपदस्याप्यभावे हृत्पुण्डरीकान्तर्गतोपासना-विषयककैवल्योपनिषदादिगतशिवासाधारणोमासहायत्रिलोचननीलकण्ठादिपदै-र्हृत्पुण्डरीके शिवस्यैवोपास्यत्वनिर्णयेन तदेकवाक्यतया तस्मिन् यदन्तस्तद-न्वेष्टव्यमिति छान्दोग्यवाक्यगतयत्तच्छब्दाभ्यां शिवस्यैव ग्रहीतुमौचित्यमित्यनु-पदोक्तमत्रानुसन्धेयम्।

अन्तर्यामी जो वस्तु है, तत् = वह ब्रह्मस्वरूप वस्तु, अन्वेष्टव्यम् = खोजने योग्य है, तद्भाव = उस अन्वेषणीय वस्तु को, जिज्ञासितव्यम् = विचारपूर्वक निर्णय करके समझ लेना चाहिए।

इस मन्त्र में हृदय पुण्डरीक में स्थित वस्तु को समझ लेने की बात कही गई है। वहाँ शिव या अन्य देवता को बताने वाला पद नहीं दीखता। हृदयाकाश में जो वस्तु है, उस वस्तु को खोजना चाहिए और उसी वस्तु को समझना चाहिए, ऐसा कहने पर भी कैवल्य, अथर्वशिर, कठ आदि अनेक उपनिषदों में आये हुए ये पद शिव में ही रूढ़ हैं, क्योंकि उमासहाय, त्रिलोचन, नीलकण्ठ आदि असाधारण विशेष पदों से हृत्पुण्डरीक में उपासना की जाने वाली वस्तु शिव-रूप ही सिद्ध होती है। उसी तरह "दहरं····तदुपासितव्यम्" यह तैत्तिरीय वाक्य भी शिवरूप वस्तु की ही दहराकाश में उपासना करने का विधान करता है।

**शंका**—तैत्तिरीय श्रुति के प्रथम तथा द्वितीय अनुवाक में 'नारायण' पद आने से हृदय पुण्डरीक में उपासना की जाने वाली वस्तु नारायणरूप वस्तु है, ऐसा क्यों न निर्णय किया जाय?

**समाधान**—इसी तैत्तिरीय श्रुति में और कैवल्य, कठ आदि अनेक श्रुतियों में महेश्वर, कृष्णपिङ्गल, विरूपाक्ष, त्रिलोचन, नीलकण्ठ, उमासहयाय, आदि विशेष पद आये हैं। इन पदों का शिव अर्थ तो करना ही है, क्योंकि अन्य

**वाक्येन च शिवस्य दहरोपासनोपास्यत्वविधानेनात्र देवतान्तरविधानेऽनियतविषयकत्वापत्तेः ।**

अनियतविषयकत्वापत्तेरिति। ननु शालग्रामे जलादौ चैकस्मिन्नेव स्थानेऽनेकदेवानां पूजादिदर्शनेन प्रतीकैक्येऽप्युपासनाभेदेनानियतविषयकत्वं न दोष इति चेन्मैवम्, तत्तद्दैवतैकान्तिकभिन्नभिन्नपदैरुपासनाभेदस्य निर्णीतत्वेनानियतविषयकत्वस्यादोषत्वेऽपि नियतविषयकैकोपासनाया उपपत्तिसंभवेऽनियतविषयकत्वपक्षस्य हेयत्वावश्यम्भावाद् जलादिप्रतीके भिन्नानामेव वाक्यानां तत्तदुपासनाबोधकत्वेन सन्दिग्धार्थकत्वाभावान्निष्प्रत्यूहप्रवृत्तिप्रयोजकत्वोपपत्त्या तथोपगमेऽपि प्रकृते तैत्तिरीयकवाक्यस्यैकस्यैवोपास्यद्वयांशाकृष्यमाणत्वे सन्दिग्धार्थकतया प्रवर्तकत्वमेवोच्छिद्येतेति नानियतविषयकत्वं स्वीकर्तुं शक्यम्, अनुवाकत्रयस्यैकोपासनाविषयकत्वाऽभिप्रायेणाऽयं दोषो बोध्यः।

देवताओं का अर्थ यहाँ पर सम्भव नहीं है। इसलिए 'सहस्रशीर्ष' अनुवाक में आए हुए 'नारायण' पद का "नरा अयनं अस्य", "नराणां समूहः अयनम् अस्य" इस व्युत्पत्ति के बल से अवयवार्थ स्वीकार करने से वह नारायण पद शिवपरक हो जायेगा, तो शेष सभी वाक्यों का समन्वय भी हो जाता है। त्रिलोचन, नीलकण्ठ, उमासहाय आदि पदों में रहने वाले रूढ्यर्थ को छोड़कर दूसरा अर्थ लेना साध्य नहीं है। इसलिए अकेले नारायण पद का यौगिकार्थ मानकर शेष सभी वाक्यों का समन्वय कर लेना ही न्यायसंगत है।

इस प्रकार दहराकाश में रहनेवाली उपास्य वस्तु का निर्णय न कर लेने पर अपनी-अपनी इच्छा के अनुसार जिस किसी देवता को भी उपासना का विषय बताने पर विष्णु की उपासना करनी है? अथवा शिव की उपामना करनी है? या अन्य किसी देवता की उपासना करनी है? ऐसे अनेक संशय उत्पन्न होने पर सन्देह के अधीन हो जाना पड़ेगा। शास्त्रकार इस प्रकार अनेक प्रकार से कहने को 'अनियतविषयत्व' ऐसा दोष कहते हैं। इस प्रकार के दोष को अवकाश न देकर दहराकाश में प्रकाशमान वस्तु शिवरूप वस्तु है, ऐसा निर्णय कर उपासक ध्यान करता हुआ परमपुरुषार्थ को प्राप्त करे।

**शंका**---सालिग्राम आदि एक-एक स्थान में अनेक देवताओं की पूजा करने का सम्प्रदाय लोक में देखा जाता है। इसलिए प्रतीक (विग्रह) एक होने पर भी उपासनाएँ अनन्त होने से अनियतविषयकत्व (एक में अनेक देवताओं की पूजा) दोष मानने की कोई आवश्यकता नहीं है।

**समाधान**—ऐसे स्थलों में नियमपूर्वक उन उन देवताओं का बोध करानेवाले भिन्न-भिन्न पद दीखने से अनेक देवताओं की उपासना का भेद निश्चित हो जाता है। इसलिए उस स्थान पर 'अनियतविषयकत्व' दोष नहीं है। लेकिन नियमपूर्वक एक ही देवता की उपासना करनी है, ऐसे सिद्ध स्थान में अनियत-विषयकत्व दोष को मान लेना ही न्याय्य है। यहाँ पर एक तैत्तिरीय वाक्य में अनेक प्रकार की उपासनाओं का विधान मानने पर उससे उपासक के लिए और भी सन्देह उत्पन्न हो जाने से किसी की भी उपासना में प्रवृत्ति नहीं होगी। इसलिए तैत्तिरीय के तीनों अनुवाकों में एक ही देवता को उपास्य वस्तु कहना ही मुख्यांश है। इसलिए इस 'अनियतविषयकत्व' को दोष के रूप मानना ही है।

**शंका**—इस प्रकार का निर्णय कर लेने पर तैत्तिरीय में आये हुए नारायण पद के अवयवार्थ को स्वीकार करने पर शिव के विशेषण के रूप में हम उसको स्वीकार नहीं करेंगे। नारायण ही दहराकाश में उपासनायोग्य वस्तु है, ऐसा हम कहेंगे।

**समाधान**—तैत्तिरीय श्रुति में "नारायणः परं ब्रह्म" इस प्रकार नारायण को परब्रह्म सिद्ध करने वाला पद तो है, लेकिन उपक्रम-उपसंहार, अभ्यास, अपूर्वता, फल, अर्थवाद और उपपत्ति—इन छः प्रकार के लिङ्गों से श्रुतियों के तात्पर्य का निश्चय किया जाता है। यहाँ पर "अणोरणीयान्" से लेकर "महिमानमीशः" यहाँ तक सम्पूर्ण प्राणियों की हृदयरूपी गुफा में ईश अन्तर्वर्ती होकर रहता है और उस ईश के अनुग्रह से उपासक सभी प्रकार के दुःखों से रहित होकर परमात्मा का साक्षात्कार कर लेते हैं। इस ईश के महत्त्व का वर्णन करने का उपक्रम करके फिर आगे अपरा शक्तिविशिष्ट वह परमेश्वर ही जगत् का उपादानकारण है, ऐसा प्रतिपादन करके, जो विश्वाधिक है और सर्वज्ञ है, उस ईश ने प्रपञ्च से लेकर हिरण्यगर्भ पर्यन्त सभी की सृष्टि की है, ऐसा कहने से वह ईश्वर जगत् का निमित्तकारण भी है, ऐसा स्पष्ट हो जाता है। इसके बाद वे ही दहर-पुण्डरीक में रहकर निष्काम कर्म का अनुष्ठान करने वाले को, सम्पूर्ण वेदान्त के तात्पर्य को समझे हुए जितेन्द्रिय यतियों को बन्धन से निवृत्त कराकर सर्वोत्कृष्ट मुक्ति को देते हैं, ऐसा वर्णन किया गया है। बाद में वैसी मुक्ति को प्राप्त करने के लिए उपाय बतलाने के उद्देश्य से "दहरं विपाप्मम्" इस प्रकार दहरपुण्डरीक की उपासना का आरम्भ करके "तस्मिन् यदन्तस्तदुपासितव्यम्" इस प्रकार दहर-पुण्डरीक में जो रहता है, उसी की उपासना करनी चाहिए, ऐसा सामान्य रूप से उपदेश देकर और उपास्य वस्तु का स्वरूप क्या है? ऐसी आकांक्षा होने पर दहरा-

**किञ्च, उपासनाविधिस्थले उपास्योपासनोपासकानां त्रयाणामपि विधेयत्वेनोपासकाकाङ्क्षायाम्—"नारायणं महाज्ञेयम्" (तै. आ. १०।११।१) इत्याद्यभिधाय "पद्मकोशप्रतीकाशम्" (तै. आ. १०।११।२) इति दहरपुण्डरीकप्रदर्शनेन "अपरिमाणे शिष्टस्य" (मो. ६।७।२१) इत्यपरिमिताधि-**

---

एतावता प्रबन्धेन शिवस्यैव दहरोपासनाविषयत्वमित्युपपाद्य तत्प्रकरणपठितनारायणपदसङ्गतिमुपपादयति—किञ्चेत्यादिना। उपासकाकाङ्क्षायामिति। उपासनाया उपास्योपासकोभयसंबन्धित्वनियमेनोपनिषदन्तरैकवाक्यतयोपास्यस्वरूपनिर्णये जाते परिशेषान्नारायणपदमुपासकस्वरूपसमर्पकमेव मन्तुमुचितमिति तद्ग्रन्थकृत्तात्पर्यम्। अत्रैव हेत्वन्तरमपि क्रोडी-

काश में रहनेवाला महेश्वर ही है, इस प्रकार उसके स्वरूप को स्पष्ट किया गया है। इसी प्रकार आगे के मन्त्रों में भी कृष्णपिंगलत्व, विरूपाक्षत्व आदि लक्षण दिखा कर उपसंहार किया गया है। इस प्रकार के उपक्रम और उपसंहार के बीच में "नारायणपरं ब्रह्म" इस विशेष वाक्य के आने से इस नारायण पद का पूर्वाधिकरण न्याय से उपासक ही है, ऐसा अर्थ कहना चाहिए, यह सिद्ध होता है। लेकिन सभी लोक उपासक ही हैं, तो यहाँ पर केवल नारायण को उपासक कहने पर सभी उपासकों से नारायण श्रेष्ठ उपासक हैं, ऐसा सिद्ध होता है। इसलिए यहाँ पर उपास्य और विरूपाक्ष शब्दवाच्य जो ब्रह्म है और जो ब्रह्मोपासक नारायण है, इस वाक्य से उन दोनों का अभेद दिखलाया गया है। ऐसा न मानने पर उपक्रमोपसंसार आदि षड्विध लिंगों से ज्ञापित तात्पर्य का विरोध होता है, ऐसा अभिप्राय ब्रह्मसूत्र भाष्य में दिखाया गया है।

**शंका**—इस प्रकार पूर्वोत्तर वाक्यों का विचार करने से दहराकाश में उपासना को जानेवाली वस्तु शिवरूप वस्तु ही है, ऐसा निर्णय होने पर भी लोक में कोई भी उपासना करना चाहे तो उपासक, उपास्य और उपासना इन तीनों की आवश्यकता होती है। यहाँ पर दहराकाश में उपास्य वस्तु शिव है, ऐसा कहने के बाद इस शिव की उपासना करनेवाला उपासक कौन है?

**समाधान**—तैत्तिरीय में "नारायणं महाज्ञेयम्" ऐसा बताते हुए "पद्मकोशप्रतीकाशम्" इससे कमलसदृश दहरपुण्डरीक दिखलाया है। इस वाक्य के सान्निध्य में "नारायणं महाज्ञेयम्" ऐसा वाक्य होने से नारायण का हृदयकमल है, ऐसा निश्चय कर लेना चाहिए, क्योंकि समीप के पद को छोड़ कर दूरवर्ती पद को लेने

**करणन्यायेन सन्निधिश्रुतनारायणपरित्यागेनान्यनिरीक्षणायो-**

करोति—अपरिमाणे शिष्टस्येत्यादिना। आधाने श्रूयते—"एका देया षड्देया द्वादश देया चतुर्विंशतिर्देया शतं देयं सहस्रं देयमपरिमितं देयम्" इति। तत्रापरिमितपदे सन्देहः—किमपरिमितपदेन सन्निहितानामेकत्वादिसंख्यानां प्रतिषेधः क्रियते? आहोस्वित् परिमाणसामान्यस्येति। तत्रेदं पूर्वपक्षसूत्रम्—"अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात्" (मी. ६।७।२१) इति। अयमर्थः—अपरिमितपदे शिष्टस्यैकत्वादिना विहितस्यैकत्वादिसंख्यारूपपरिमाणस्य प्रतिषेध उच्यते। कुत इत्याह—तच्छ्रुतित्वादिति। तस्या एकत्वादिसंख्यायाः श्रुतित्वात्, कर्मणि क्विना श्रूयमाणत्वादित्यर्थः। प्रत्यासन्नत्वादिति यावत्। एवमेव प्रकृते पद्मकोशप्रतीकाशमित्युपास्याधिकरणे हृदये वर्ण्यमाने कस्य हृदयमिति प्रतियोग्यपेक्षायां नारायणं महाज्ञेयमिति नारायणस्य प्रत्यासन्नत्वात् तत्संबन्ध्येव ग्राह्यमिति भावः। यद्यपीदं पूर्वपक्षसूत्रम्, "अनियमः" (मी. ६।७।२३) इत्याद्युत्तरसूत्रद्वयेनापरिगणितत्वस्यैव सिद्धान्तितत्वात्, तथापि तत्रैका देया इत्यादिवाक्यमर्यादामाहात्म्यादपरिमितपदजन्यस्वारसिकप्रत्ययबलाच्च प्रत्यासत्तिन्यायबाधेऽपि तादृशबलवद्विरोधि-

पर 'अपरिमिताधिकरण' न्याय का विरोध होगा। उस न्याय का स्वरूप तो यागीय आधान में—"उनको एक देना है, इनको छः देना है, दूसरे को बारह देना है, इनसे दूसरे को चौबीस देना है, दूसरे को सौ देना है, दूसरे को हजार देना है और अन्य को अपरिमित देना है" ऐसा कहा गया है। यहाँ पर आया हुआ अपरिमित पद समीप में आये हुए हजार, सौ, एक आदि पदों का निषेध कर रहा है, अथवा लोकव्यवहृत संख्यासामान्य का निषेध कर रहा है? इस प्रकार का सन्देह होने पर, वह अपरिमित पद निकटवर्ती केवल एकत्व आदि संख्या का ही निषेध कर रहा है, न कि लोक-व्यवहार में रहने वाली सभी संख्याओं का। इसी प्रकार "पद्मकोशप्रतीकाशम्" इस वाक्य के निकट में नारायण पद के होने से नारायण का हृदयकमल ही है, वैसा निर्णय होने से, अपने हृदय में अपनी ही उपास्यता के न हो सकने के कारण नारायण उपासक है और शिव उपास्य है, ऐसा सिद्ध हो जाता है।

**शंका**—नारायण अपने हृदयकमल में शिव की उपासना करते हैं, ऐसा अर्थ क्यों लेना? इस दहर वाक्य के समीप में ही वेदान्त-विचार से तत्त्व का निर्णय करके परिशुद्ध गुणों से विशिष्ट सर्वसंग परित्याग किये हुए संन्यासी लोग जीवन

गात् तस्यैव दहरपुण्डरीकप्रतियोगित्वापत्त्या स्वीयहृदये स्वस्योपास्यत्वायोगाच्च शिवस्यैव नारायणहृद्युपास्यत्वं सिद्ध्यति ।

न च "वेदान्तविज्ञानसुनिश्चितार्थाः" (तै. आ. १०।१०।३) इत्येतद्वाक्यश्रवणेन यतीनामेव हृदयपुण्डरीकप्रतियोगित्वेनान्वयः किं न स्यादिति वाच्यम्, दर्शपूर्णमासप्रकरणपठित-

---

प्रमाणाभावस्थले प्रकृतपूर्वपक्षसूचितप्रत्यासत्तिन्यायेन नारायणस्य हृत्पुण्डरीकप्रतियोगित्वनिर्णये न किञ्चिद्बाधकमिति भावः। वस्तुतस्त्विदमभ्युच्चयमात्रम्, हृदयप्रतियोगित्वेनोपासकमात्रस्यैव ग्रहीतुमौचित्यात्। नारायणपदोत्थितशङ्कासमाधानं तु पूर्वोक्तं नरा अयनमस्येति व्युत्पत्त्या, प्रज्ञाद्यणि नराणां समूहोऽयनमस्येति व्युत्पत्त्या वा, "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृत ॥" (१।१०) इति मनुस्मृत्युक्तदिशा नारा अयनमस्येति व्युत्पत्त्या वा यौगिकत्वमाश्रित्य शिवभगवत्परत्वमेव प्रकृते नारायणपदस्य वक्तुं शक्यमित्येवोचितम्। वैपरीत्यं तु वक्तुमशक्यम्, नीलकण्ठं त्रिलोचनमुमासहायमित्यादिबहूनां पदानां रूढ्यर्थपरित्यागेनान्यार्थकत्वक्लिष्टकल्पनापेक्षया एकस्मिन् नारायणपद एव तथा कल्पनौचित्यात्।

न च वेदान्तविज्ञानसुनिश्चितार्था इति। "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात् परि-

---

काल पर्यन्त जीवन्मुक्तों की तरह रहकर देह का वियोग होने पर परमात्मा को प्राप्त कर नित्य सुख को पा लेते हैं। इस अभिप्राय के तैत्तिरीय श्रुति मन्त्र के होने से संन्यासी ही दहराकाश में उपासना करने का अधिकारी है, ऐसा स्पष्ट हो जाता है। तब सर्वसंग परित्यागी संन्यासी ही उपासक है, ऐसा कहना छोड़कर नारायण उपासक है, ऐसा कहना उचित नहीं है।

**समाधान**—पूर्णिमा के दिन और अमावास्या के दिन किये जाने वाले याग को 'दर्शपूर्णमासेष्टि' कहते हैं। इस प्रकरण में "समिधो यजति, इडो यजति, बर्हिर्यजति, तनूनपातं यजति, स्वाहाकारं यजति" इस प्रकार पाँच वाक्य कहे गये हैं। दर्शपूर्णमास प्रकरण में कहे जाने के कारण ये उस दर्शपूर्णमास याग के अंग हो सकते हैं, न कि अन्य यागों के—ऐसा मीमांसाशास्त्र में निर्णय किया गया है। उसी प्रकार "नारायणं महाज्ञेयम्, नारायणं परं ज्योतिः, नारायणं परो

"समिधो यजति" इतिवाक्यविहितप्रयाजानां दर्शपूर्णमासाङ्गत्ववन्नारायणप्रकरणपठितहृदयस्य नारायणसम्बन्धित्वावश्यंभावात् ।

अपि च, "ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजशायिनम् । दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम् ॥" (६२।२३) इति वामनपुराणवचनेन नारायणस्य हृदयान्तर्वर्तिप्राणलिङ्गोपासनाप्रदर्शनेन, भगवद्गीतासु—"तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी" (भ. गी. १४।४) इति कृष्णेन स्वप्रपदनीयपुरुषं प्रदर्श्य कोऽसावित्युक्ते—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय

---

मुच्यन्ति सर्वे ॥" (तै. आ. १०।१०।३) इति दहरवाक्यादव्यवहितपूर्वमेव पठितमस्ति । यतीनामिति । तेषां विद्यावत्त्वेनोपासकत्वयोग्यतया तत्सम्बन्ध्येव हृदयं ग्राह्यमिति प्रश्नकर्तुराशयः । "समिधो यजति, इडो यजति, बर्हिर्यजति, तनूनपातं यजति, स्वाहाकारं यजति" (तै. सं. २।६।१।१) इति पञ्चवाक्यविहितप्रयाजानां दर्शपूर्णमासाङ्गत्ववत् प्रकरणबलेन नारायणप्रकरणपठितहृदयस्य नारायणसम्बन्धित्वं स्वीकर्तव्यमित्युत्तराशयः ।

नारायणेन स्वहृदयपुण्डरीके लिङ्गस्वरूपः सदाशिव उपास्यत इत्यर्थं वामनपुराणेन भगवद्गीतावाक्याच्च साधयति—ततोऽव्ययात्मेत्यादिना । यद्यपि गीतायाम्—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" (१५।१७) इत्युक्त्वा—"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मिल्लोके

ध्याता इस नारायण प्रकरण में हृदयकमल को दिखलाने से नारायण सम्बन्धी हृदयकमल है, ऐसा निर्णय कर लेना उचित है । इस प्रकार का अर्थ छोड़ कर संन्यासियों के हृदयकमल का ग्रहण करने पर प्रकरण का विरोध हो जाता है ।

इतना ही नहीं, नारायण अपने हृदयकमल में शिव की उपासना करते हैं, यह बात वामनपुराण एवं भगवद्गीता से भी स्पष्ट हो जाती है । "नाशरहित उस नारायण ने अपने हृदयपुण्डरीक में रहने वाले लिंगरूपी सदाशिव को देवताओं को दिखलाया" । "हे अर्जुन ! जगत् के आदि में जिनकी कृपा से जगन्निर्माणरूप प्रवृत्ति हुई है, उस आदिपुरुष का मैं आश्रय लेता हूँ" । इस प्रकार श्रीकृष्ण अपने से उपासना की जानेवाली वस्तु को अर्जुन के निमित्त उपदेश देते हुए अपने लिए उपास्य क्या है ? उस वस्तु को अपने आप आक्षेप करके आगे कहते हैं—

ईश्वरः ।।" (भ. गी. १५।१७), "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (भ. गी. १८।६१) इति स्वोपास्यपुरुषस्य हृदयान्तर्वर्तिनः शिवैकान्तिकेश्वरपदेन निर्णयकरणेन च दहरोपासनाधिकरणहृदयसंबन्धिताया नारायणस्यावश्याभ्युपेयत्वात् ।

अथैवमुक्तप्रणाल्या परमशिवस्य दहरोपासनोपास्यत्वसिद्धावपि तत्रत्यस्य लिङ्गरूपत्वे प्रमाणाभावान्नान्तर्लिङ्गधारणसिद्धिः? इति चेन्मैवम्, हंसोपनिषदाद्यागमेषूदाहृतवामनपुराणेऽपि तस्य तद्रूपत्वावसायात् ।

---

वेदे च प्रथितः पुरुषोत्तमः ।।" (१५।१८) इति वाक्येन स्वस्यैवोत्तमपुरुषत्वमुक्तम्, तथापि श्रीकृष्णविग्रहान्तर्यामिणः परमेश्वरस्यैव तदुक्तित्वेन न कश्चिद्विरोधः ।

लिङ्गरूपत्वे प्रमाणाभावादिति । गीतायामिति शेषः । वामनपुराणे तत्प्रमाणस्य दर्शितत्वात् । हंसोपनिषदिति । मा भूद् गीतायां लिङ्गरूपत्वे प्रमाणम्, तथापि प्रमाणान्तरसद्भावे सप्रमाणकत्वे न किञ्चिद्धीयत इत्याशयः ।

"हे अर्जुन ! मुझसे उपासना किये जाने वाले पुरुष तो सर्वोत्तम हैं । वे मुझसे भिन्न हैं । उन्हीं को परमेश्वर कहते हैं । नाशरहित जो ईश्वर स्वर्ग, मर्त्य, पाताल नामक तीनों लोकों में अन्तर्यामी के रूप में रहकर रक्षा कर रहे हैं, वह सर्वनियामक ईश्वर हृदयकमल में निवास करता है ।" इस प्रकार श्रीकृष्ण ने निरन्तर अपने हृदयकमल में अपने से उपासना की जानेवाली शिवरूप वस्तु के बारे में अर्जुन को उपदेश किया है । इसके अतिरिक्त यहाँ पर केवल शिव में रूढ ईश्वर पद का श्रीकृष्ण प्रयोग करते हैं । इसलिए यह ईश्वर शब्द "ईश्वरः शर्व ईशानः" इस कोश के प्रमाण वाक्य से शिव में ही शक्ति वाला होने से श्रुति में दिखाया गया दहरोपासना का आश्रयस्वरूप कमल तो नारायण का हृदयकमल ही है, ऐसा सिद्ध हो जाने से शिव ही उपास्य हैं और नारायण ही उपासक हैं, ऐसा स्पष्ट हो जाता है ।

**शंका**—शिव उपास्य है, ऐसा सिद्ध होने पर भी, वह शिव लिंगस्वरूप में है, ऐसा स्पष्ट नहीं होता । इसलिए जिस अन्तर्लिंग के धारण का उपक्रम किया गया है, उसकी सिद्धि नहीं हो पाती ।

**समाधान**—पिछला जो उदाहरण वामनपुराण का है, उससे ही शिव के लिंग रूप की सिद्धि हो जाती है । इसी प्रकार हंसोपनिषत्, शिवागम, पुराण आदि से भी शिव लिंगरूप हैं, यह स्पष्ट हो जाता है । हंसोपनिषद् में कहा गया है कि

**तथाहि—"एषोऽसौ परमो हंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तम् । तस्याष्टधा वृत्तिर्भवति—पूर्वदले पुण्यवृत्तिः, आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रौर्यमतिः, नैर्ऋते पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ऐशान्ये द्रव्यादानम्, मध्ये वैराग्यम्, केसरे जाग्रदवस्था,**

---

हृत्पुण्डरीकान्तर्वर्तिनः परमेश्वरतत्त्वस्य लिङ्गरूपत्वे वामनपुराणं प्रमाणत्वेनोपन्यस्य हंसोपनिषद्वाक्यमप्युपन्यस्यति—एषोऽसाविति । परमो हंस इति स्वरूपतः स्वच्छनीरक्षीरविवेककर्तृहंसप्रतियोगिकविवेकनिर्मलत्वसाधर्म्यादात्मविदि हंसत्वपरमहंसत्वव्यवहारं शास्त्रकाराः कुर्वन्ति । तस्याष्टधा वृत्तिरिति हृदयपुण्डरीकस्य द्वादश भागाः कल्प्यन्ते । अष्टसु दिक्षु अष्टदलानि । मध्यकेसरकर्णिकालिङ्गरूपाश्चत्वारो भागा दलमध्ये कल्प्यन्ते । एतेष्वात्मनस्तत्तदंशाभिमानित्वेन तत्तद्वृत्तिस्तत्तदवस्था च भवतीत्यत्रोच्यते—पूर्वदले पुण्यमतिरित्यादिना । पूर्वदलेऽभिमानलक्षणसम्बन्धे पुण्यमतिः पुण्यकरणेच्छा भवतीत्येवंरूपेणाग्रिममपि व्याख्येयम् ।

येन = जिस हृदयकमल में रहनेवाले ईश्वर से, इदं = चेतनाचेतनात्मक जगत्, व्याप्तं = व्याप्त है, एषः = यह, असौ = परमेश्वर, परमः = निरतिशय उत्कृष्टस्वरूप वाला है, हंसः = दूध और पानी को अलग करने वाले हंसपक्षी की तरह यह विवेचक हंस निर्मल आदि सद्‌गुणों से भूषित है, तस्य = उस परम हंसरूप शिव के निवासस्थानस्वरूप हृदयकमल की, अष्टधा = आठ प्रकार की, वृत्तिः = पंखुडियाँ हैं । उन पंखुडियों में विहार करने वाले आत्मा के पूर्वदले = पूरब के दल में आने पर पुण्य कर्मों में प्रवृत्त करने वाली बुद्धि का उदय होता है, आग्नेये = आग्नेय नामक दिशा के दल में आने पर, निद्रालस्यादयः = नींद एवं आलस्य आदि दोषों का उदय हो जाता है । याम्ये = दक्षिण दिशा के दल में आने पर, क्रौर्यमतिः = क्रूर बुद्धि का उदय होता है । नैर्ऋत्ये = नैर्ऋत्य नामक दिशा के दल में आने पर पापे = पाप कर्म करने की मनीषा = बुद्धि का उदय होता है । वारुण्यां = पश्चिम दिशा के दल में आने पर, क्रीडा = विहार करने की इच्छा होती है । वायव्ये = वायव्य दिशा में आने पर, जाने-आने आदि की बुद्धिः = इच्छा होती है । सौम्ये = उत्तर दिशा में आने पर, रतिप्रीतिः = काम की इच्छा होती है । ऐशान्ये = ईशान्य दिशा में आने पर, द्रव्यादानं = रुपये कमाने की इच्छा होती है । मध्ये = बीच में रहने पर, वैराग्यं = विषयों में विरक्ति होती है । केसरे = किंजल्क में रहने

**कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयम् । यदा हंसो नादे विलीनो भवति, तदा तत्तुरीयातीतमपि" (हं. उ. २)। अत्र लिङ्गे सुषुप्तिरिति हृदयान्तर्वर्तिनः शिवस्य लिङ्गरूपत्वं स्पष्टम् ।**

---

अत्रात्मगतत्रयोदशभागप्रदर्शनेऽपि तस्याष्टधा भवतीत्यष्टत्वोक्तिस्तु जाग्रत्स्वप्न-सुषुप्तितुरीयतुरीयातीतावस्थानां वृत्तित्वव्यवहाराभावमात्रेण बोध्या। शिवस्य लिङ्गरूपत्वमिति। अन्यथा पद्ममध्ये मध्यकेसरकर्णिकातिरेकेण चतुर्थस्य कस्यचिदभावाल्लिङ्गे सुषुप्तिरिति निर्विषयं स्यादिति भावः।

पर, जाग्रत् = जाग्रदवस्था रहती है। कर्णिकायां = कमल के बीच की कर्णिका में रहने पर, स्वप्नः = सपने में प्रवेश हो जाता है। लिङ्गे = लिंग में रहने पर, सुषुप्तिः = गहन निद्रा में प्रवेश हो जाता है। पद्मत्यागे = उस हृदयकमल को छोड़ देने पर, तुरीयः = तुरीय अवस्था में प्रवेश हो जाता है। यदा = जब, हंसः = हंस पक्षी की तरह गुण दोषों का विवेचक आत्मा, नादे = नादस्वरूपात्मक ब्रह्म में, विलीनः = पूर्णतया लीन, भवति = हो जाता है, तदा = उस समय, तत् = वह, तुर्यातीतं = तुरीयातीत अवस्था में रहेगा।

**भावार्थ**—हृदय कमल में संचार करने वाला हंसरूपी आत्मा उस कमल की जिस जिस पंखुडी में संचार करता है, तब तब उस उस वृत्ति का उदय हो जाता है। कमल के बीच की केसर में संचार करने पर आत्मा जागता रहेगा। कर्णिका में प्रवेश करने पर स्वप्नावस्था में रहेगा। लिंग में प्रवेश करने पर सुषुप्त्यवस्था में रहेगा। उस हृदय स्थान से अलग होने पर तुरीयावस्था में रहेगा और ब्रह्म में लीन हो जाने पर तुरीयातीत अवस्था में रहेगा। इन्हीं अवस्थाओं को इस तरह से भी बताया गया है कि आत्मा के मुख में रहने पर जाग्रदवस्था, हृदय में रहने पर स्वप्नावस्था, नाभि में होने पर सुषुप्त्यवस्था, बस्ति में (मूत्रसंग्रह कोश में) प्रवेश करने पर तुरीय अवस्था और लिंग में प्रविष्ट हो जाने पर तुरीयातीत अवस्था होती है। प्रथम जाग्रदवस्था में त्वक्, रसना, घ्राण, चक्षु और श्रोत्र नामक पाँच ज्ञानेन्द्रियां; शब्द, स्पर्श, रूप, रस और गन्ध नामक पाँच तन्मात्राएँ; वाक्, पाणि, पाद, पायु और उपस्थ नामक पाँच कर्मेन्द्रियां; वचन, आदान, गमन, रेचन और विसर्जन नामक पाँच विषय; दस वायु, मन, बुद्धि, चित्त और अहङ्कार नामक अन्तः-करणचतुष्टय और क्षेत्रज्ञ—ये पैंतीस तत्त्व रहते हैं। स्वप्नावस्था में शब्द आदि पांच तन्मात्राएँ, वचन आदि पाँच विषय, प्राण आदि दस वायु, अन्तःकरणचतुष्टय और

आगमवाक्यानि तु—"आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्।
भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत् ॥" (६।३९)
इत्यादिसिद्धान्तशिखामण्यादिवचनान्यनुसन्धेयानीति।

अथास्यामुपनिषदि दहरोपासनाविषये नारायणस्योपासकत्वं शिवस्योपास्यत्वमिति निर्णयेन सहस्रशीर्षमित्यनुवाकगत-"नारायणपरं ब्रह्म तत्त्वं नारायणः परः" (तै.आ.१०।११।१) इत्यादिवाक्यानि विरुध्येरन्निति तु मा शङ्किष्ठाः, तद्भावभावनापन्नस्य नारायणस्यानितरसाधारणहृदयान्तर्वर्तिज्योतिर्लिङ्गानुसन्धानसामर्थ्यलिङ्गेन तथा स्तुतिरिति योजयितुं शक्यत्वात्।

---

आधारे कनकप्रख्यमिति। आधारे बाह्यपूजास्थाने नाभिचक्रे वा। विद्रुमप्रभं प्रवालच्छायम्। अनितरसाधारणेति। इतरोपासकापेक्षया नारायणे शिवलिङ्गानुसन्धानस्यात्यन्तोत्कर्षशालित्वेन शिवभावापत्त्या तस्यापि परब्रह्मत्वोक्तिरित्याशयः।

क्षेत्रज्ञ—ये पचीस तत्त्व माने गये हैं। जाग्रदवस्था में तो विषयों का अनुभव होता है, स्वप्नावस्था में केवल विषयों की स्फूर्ति होती है। सुषुप्ति अवस्था में प्राण, चित्त और क्षेत्रज्ञ नामक केवल तीन तत्त्व माने जाते हैं। तुरीयावस्था में प्राण और आत्मा नामक दो तत्त्व माने गये हैं और तुरीयातीत अवस्था में केवल आत्मा रहती है। इस प्रकार ये पाँच प्रकार की अवस्थाएँ मल से सम्बद्ध आत्मा को होती हैं। इसके बाद निर्मल आत्मस्वरूप शिव के साथ समानता को प्राप्त कर लेने पर शिवत्व की प्राप्ति हो जाती है। इस प्रकार के आत्मस्वरूप में समल जाग्रदादि अवस्थाएँ न होने पर भी अमल जाग्रदादि अवस्थाएँ होती हैं। इसी प्रकार बीजाक्षर का उच्चारण ही जाग्रदवस्था है, बिन्दु का परिग्रह ही स्वप्नावस्था है, नाद का संयोग ही सुषुप्त्यवस्था है, शक्ति का समागम ही तुरीयावस्था है और परशिव के तेज में शान्त परमसमानता को प्राप्त होकर लय हो जाना ही तुरीयातीत अवस्था है। यहाँ पहले आठ पंखुडियाँ हैं, ऐसा बता कर बाद में तेरह भाग दिखाये गये हैं, अतः पहले के आठ भाग केवल पंखुडियों के हैं, ऐसा भेद समझ लेना चाहिए।

इस मन्त्र में "लिङ्गे सुषुप्तिः" ऐसा वाक्य होने से इस प्रकार के हृदयकमल के बीच केसर और कर्णिका को छोड़ कर चौथे किसी भाग को स्थिति न होने से

**केचित्तु नारायणपरं ब्रह्मेत्यस्य नारायणात् परं ब्रह्मेत्यर्थः। अत एव नारायणः परं ब्रह्मेत्यनुक्त्वा नारायणपरं ब्रह्मेत्येवाभिहितम्। तथा चोक्तरीत्या तत्परत्वं शिवस्यैवेति न कश्चिद् विरोध इति प्राहुरित्यलमतिविस्तरेण।**

**एवमस्यामुपनिषदि ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गधारणं विधाय इष्टलिङ्गरूपबाह्यलिङ्गधारणमपि विधीयते— "सर्वलिङ्गं स्थापयति" (तै. आ. १०।१६।१) इति।**

---

केचित्त्विति। एतन्मते नारायणपरमित्यत्र पञ्चमीसमासो मन्तव्यः।

सर्वलिङ्गं स्थापयतीति। "निधनपतये नमः। निधनपतान्तिकाय नमः। ऊर्ध्वाय नमः। ऊर्ध्वलिङ्गाय नमः। हिरण्याय नमः। हिरण्यलिङ्गाय नमः। सुवर्णाय नमः। सुवर्णलिङ्गाय नमः। दिव्याय नमः। दिव्यलिङ्गाय नमः। भवाय नमः। भवलिङ्गाय नमः। शर्वाय नमः। शर्वलिङ्गाय नमः। शिवाय नमः। शिवलिङ्गाय नमः। ज्वलाय नमः। ज्वललिङ्गाय नमः। आत्मने नमः। आत्मलिङ्गाय नमः। परमाय नमः। परमलिङ्गाय नमः। एतत् सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" (तै. आ. १०।१६) इति तैत्तिरीयके षोडशानुवाके पठ्यते। एषां च मन्त्राणां सायणाचार्यकृतव्याख्यानस्यानुपलम्भात् क एषां नियोगोऽस्तीति स्पष्टं वक्तुं न शक्यते, तथापि

"लिङ्गे सुषुप्तिः" यह वाक्य व्यर्थ होने लगेगा। इसलिए लिंग शब्द का शिवरूप अर्थ कहना ही उपयुक्त है। इससे शिव का लिंगरूपत्व सिद्ध हो जाता है। इस अभिप्राय के समर्थक अनेक शिवागम बाक्य हैं।

"शिवध्यानासक्त शिवयोगी लिङ्गवाच्य शिव को आधार चक्र में सोने की तरह चमकने वाला, अनाहत चक्र में बिजली की तरह चमकने वाला और आज्ञा चक्र में स्फटिक की तरह चमकने वाला मान कर ध्यान करे। जो इस प्रकार शिव को हृदय में धारण करते हैं, वे लोग भवसागर को पार कर लेते हैं"। ऐसा शिवागम कह रहे हैं। इससे हृदयपुण्डरीक के बीच में गगनशब्दवाच्य शिव लिंगरूप के हैं, यह स्पष्ट हो जाता है।

**शंका**—"नारायण ही परब्रह्म है, नारायण ही परतत्त्व है" इन तैत्तिरीय वाक्यों का कोई अर्थ ही नहीं है, ऐसा निर्णय हो गया है न ?

**समाधान**—नारायण समस्त देवता और मानवों की अपेक्षा श्रेष्ठ शिवोपासक हैं। निरवधिक ध्यान में तल्लीन होने के कारण अपने हृदय स्थान में अवस्थित

मन्त्रलिङ्गपर्यालोचनेन नमोऽन्तानामीश्वरप्रणामेऽङ्गत्वप्राप्तौ—"ऐन्द्रया गार्हपत्यमुपतिष्ठते" (मै. सं. १।५।११) इति प्रत्यक्षश्रुतिविहितगार्हपत्योपस्थानाङ्गत्वेन लिङ्गप्राप्तेन्द्रोपस्थानाङ्गत्वबाधवत् "एतत्सोमस्य सूर्यस्य" इति वाक्यशेषश्रुतौ पूर्वमन्त्रसमुदायपरामर्शकेनैतत्पदेन लुप्ततृतीयान्तेन सूर्यमण्डलान्तर्वर्तिनः सोमस्य उमासहितस्य सर्वस्य सर्वविधस्य सौवर्णमणिमयनार्मदादेर्लिङ्गस्य स्थापने विनियोगलाभाल्लिङ्गप्राप्तप्रणामाङ्गत्वं बाध्यत इति प्रतीयते।

ज्योतिर्लिंग के साथ वे अपनी धाराकारात्मक अहंग्रहोपसना की बुद्धि से सभी अवस्थाओं में शिवभावना में सुस्थिर हो जाते हैं। इस तरह से यहाँ शिव और नारायण का अभेद बताया गया है। ऐसा अभेद स्वीकार न होने पर "नारायणपरं ब्रह्म" यहाँ पर "नारायणात् परं ब्रह्म" इस प्रकार पञ्चमी तत्पुरुष का आश्रय लेकर परब्रह्म नारायण से भिन्न है, इस प्रकार का अर्थ ले सकते हैं। यदि परब्रह्मतत्त्व नारायण के लिए ही प्रयुक्त है, तो श्रुति में "नारायणः परं ब्रह्म" इस प्रकार भिन्न-भिन्न पद होने चाहिए। ऐसा न होने से उस नारायण पद का "नराणां समूहं नारम् अयनं अस्य" इस रीति से बहुव्रीहि समास का आश्रय लेकर उस नारायण पद को शिव पद का विशेषण बना कर एकवाक्यता कर लेनी चाहिए। इससे प्रकरण का विरोध अपने आप सुलझ जाता है।

इस प्रकार तैत्तिरीय श्रुति में आये हुए मन्त्रार्थ का विचार करते हुए अन्तर्लिंगधारण को सिद्ध करके आगे आने वाले "सर्वलिङ्गं स्थापयति" इस मन्त्र के आधार पर बाह्यलिङ्ग के धारण की सिद्धि करेंगे।

## बहिर्लिंग (इष्टलिंग) का निरूपण

निधनपतये = कालरूप शिव के लिए, नमः = नमस्कार है। निधनपतान्तिकाय = मृत्यु के बिस्तर पर लेटे हुए आदमियों के अन्तिकाय = निकट में रहकर रक्षा करने वाले शिव के लिए, नमः = नमस्कार है। ऊर्ध्वाय = शिवादि पृथिवी पर्यन्त छत्तीस तत्त्वों के ऊपर रहनेवाले शिव के लिए, नमः = नमस्कार है। ऊर्ध्वलिङ्गाय = उन छत्तीस तत्त्वों के ऊपर रहने वाले शून्यलिङ्ग के लिए, नमः = नमस्कार है। हिरण्याय = सुन्दर रूपवाले अथवा सोने के जैसे स्वरूप वाले शिव के लिए, नमः = नमस्कार है। हिरण्यलिङ्गाय = सुवर्णमय व सुवर्णाक्षरों से विशिष्ट लिंग के लिए, नमः = नमस्कार है। दिव्याय = प्रकाशस्वरूप लिंग के लिए, नमः = नमस्कार है। भवाय नमः = प्राणियों की उत्पत्ति के निमित्त कर्तृस्वरूप शिव के लिए नमस्कार है।

**नन्वत्र स्थापयतीति लडन्तत्वेन लिङाद्यभावान्न विधिसंभवः ? न च "व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति" (आप. श्रौ. १।१९।१) इत्यत्र लिङाद्यभावेऽपि विधिप्रयोजकरूपसत्त्वेन यथा विधिसम्भवस्तद्वदत्र किं च स्यादिति वाच्यम्, अत्र विधिप्रयोजकरूपाभावात्। तथाहि—"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥" (त. वा. १।२।४) इति कारिकयेदमवगम्यते यत्र प्रमाणान्तराप्राप्तस्यानेनैव विधिस्तत्रापूर्वविधिः। यथा व्रीहीन् प्रोक्ष-**

---

लिङाद्यभावादिति। लिङ्लोडादीनामेव विधेयताबोधकत्वादिति भावः। विधिप्रयोजकरूपसत्त्वेनेति। अप्राप्तत्वमेव तद्रूपम्।

अत्यन्तमप्राप्त इति। यथा व्रीहीन् प्रोक्षतीति। पाक्षिके सतीति। यथा व्रीहीनवहन्तीति। अत्र तुषविमोकसाधनत्वेन नखदलनयोरिवावघातस्यापि

भवलिंगाय नमः = प्राणधारियों के प्राणस्वरूप लिंग के लिए नमस्कार है। शर्वाय नमः = सब के लयकर्ता के लिए नमस्कार है। शर्वलिङ्गाय नमः = लयकर्ता के आधारस्वरूप लिंग के लिए नमस्कार है। शिवाय नमः = सत्पुरुषों के मन में निवास करने वाले के लिए नमस्कार है। शिवलिङ्गाय नमः = समस्त मंगलस्वरूप लिंग के लिए नमस्कार है। ज्वलाय नमः = अग्निस्वरूप के लिए नमस्कार है। ज्वललिङ्गाय नमः = अग्नि के मध्यवर्ती लिंग के लिए नमस्कार है। आत्मने नमः = जीवात्मस्वरूप के लिए नमस्कार है। आत्मलिङ्गाय नमः = जीवान्तर्गत लिंगरूप परमात्मा के लिए नमस्कार है। परमाय नमः = उत्कृष्ट गुणों से सुशोभित के लिए नमस्कार है। परमलिङ्गाय नमः = उत्कृष्ट गुणों से विशिष्ट व्यक्तियों में सुशोभित ज्ञानस्वरूप के लिए नमस्कार है। सोमस्य = उमासहित, सूर्यस्य = सूर्यमण्डलान्तवर्ती पर शिव के, सर्वलिङ्गं = विश्वात्मक, पाणिमन्त्रं = हस्तकमल को शुद्ध करने वाले, पवित्रं = सर्वपावनस्वरूप, एतत् = इस इष्टलिंग को, स्थापयति = शिर, कण्ठ आदि उत्तम अंगों में धारण करना चाहिए।

## पूर्वपक्ष

**शंका**—इस मन्त्र में 'स्थापयति' ऐसा लडन्त क्रियापद है। लिङ्, लोट्, तव्य आदि प्रत्यय जिस क्रिया में रहते हैं, उन्हीं क्रियाओं को विधिबोधकता शास्त्रसंमत है। "स्थापयेत् स्थापयितव्यम्" ऐसा कहते तो सभी शिव भक्तों के लिए कण्ठ, हाथ आदि अंगों में शिवलिंग को धारण करना है, ऐसा सिद्ध हो जाता,

**तीत्यत्र। यत्र प्रकृतकार्ये उभयोः पक्षतः प्राप्तावनेनैव कर्तव्यं न तेनेति विधीयते, तत्र नियमविधिः। यथा व्रीहीनवहन्तीत्यत्र। तत्र चान्यत्र चेति समुच्चयप्राप्तौ यत्र विधीयते सा परिसंख्या। यथा "पञ्च पञ्चनखा भक्ष्याः" (वा. रा. कि. १७।३९) इत्यत्र—"शशकः शल्यको गोधा खड्गी कूर्मस्तु पञ्चमः" इति वचनेनैषामन्येषां च पञ्चनखानां भक्षणप्राप्तौ एते पञ्चैव पञ्चनखा भक्ष्या नेतर इति परिसंख्याविधिरिति।**

---

पक्षे प्राप्तेः। तत्र चान्यत्र चेति। यथा पञ्च पञ्चनखा भक्ष्या इत्यत्र। तेषां

लेकिन 'स्थापयति' यह क्रिया विध्यर्थबोधक नहीं है, अतः इससे लिंगधारण करने की विधि कैसे सिद्ध हो सकती है ?

**समाधान**—पूर्वमीमांसा के "व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति" इन वाक्यों में 'प्रोक्षति, अवहन्ति' यहाँ पर लडन्त प्रयोग होने पर भी, दूसरे वाक्यों के द्वारा व्रीहिकर्मक प्रोक्षण व अवहनन के न आने के कारण 'अप्राप्तत्व' रूप विधि-प्रयोजन को ध्यान में रखकर जैसे लडन्त 'प्रोक्षति, अवहन्ति' इन वाक्यों को विधिवाक्य मान लिया जाता है, वैसे ही "सर्वलिङ्गं स्थापयति" इस वाक्य के लडन्त 'स्थापयति' इस क्रिया पद में भी दूसरे किसी श्रुति वाक्य द्वारा लिंगधारण अर्थ न प्राप्त होने से विध्यर्थ को स्वीकार कर लिया जाता है।

आपका यह कहना ठीक नहीं है, क्योंकि 'प्रोक्षति, अवहन्ति' इनमें प्रमाणान्तरों से जैसा अप्राप्तत्व है, वैसा यहाँ पर नहीं है। विधि—अपूर्व, नियम और परिसंख्या नाम से तीन प्रकार की है। इनमें—एक वाक्य में बताया हुआ अर्थ दूसरे में न बताया गया हो तो उसे अपूर्वविधि कहते हैं। व्रीहि (धान) का प्रोक्षण किसी दूसरे वाक्य में न आने से लडन्त प्रोक्षति पद में अपूर्व विधि का स्वीकार करना ही इसका उदाहरण है। इस नियम से यह कार्य करना है या दूसरी विधि से करना है, ऐसे दो पक्ष होने पर 'इसी विधि से करना है' ऐसा कहना ही नियम विधि का लक्षण है। जैसा कि 'व्रीहीनवहन्ति' इस स्थान पर नाखून से धान के छिलके निकालना है अथवा उलूखल से कूट कर छिलके निकालना है ? ऐसा विकल्प प्राप्त होने पर कूट कर ही छिलके निकालना है, ऐसा विधान करना ही इस नियम विधि का उदाहरण है। वहाँ और यहाँ दोनों स्थानों पर प्राप्त होने पर एक में प्रवृत्त करा कर दूसरे का निषेध करना ही परिसंख्या विधि का लक्षण है। शशक (खरगोश), शल्यक (साही), गोधा (गोह), खड्गी (गैंडा), कूर्म (कछुआ) आदि

**प्रकृते सर्वलिङ्गं स्थापयतीत्यत्र नापूर्वविधिः, लिङ्ग-धारणस्य "सर्वाननशिरोग्रीवः" (३।११) इति श्वेताश्वतरोपनिषद्वाक्यप्राप्तत्वेन प्रमाणान्तराप्राप्त्यभावात् । "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवांस्तस्मात् सर्वगतः शिवः ॥" इति । अस्यायमर्थः—सर्वेषां लिङ्गधारणयोग्या-**

---

विधिप्रकाराणां मध्ये कस्यापि प्रकृते प्राप्तिर्नास्तीत्युपपादयति—प्रकृते सर्वलिङ्गमिति ।

श्वेताश्वतरोपनिषद्वाक्यप्राप्तत्वेनेति । यद्यप्येकस्यैव सन्ध्यातर्पणादि-धर्मस्यानेकासु स्मृतिष्वेकस्यैवाग्निहोत्रधर्मस्यानेकासु शाखासु विधिर्दृश्यते, कस्यापि स्मृत्यन्तरशाखान्तरबोधितार्थबोधकत्वेन विधित्वं न व्याहन्यते, सर्वेषामेव वाक्यानां पृथक् पृथक् तत्तत्स्मृतितत्तच्छाखाध्येतारं प्रत्यज्ञातज्ञापकत्वेन विधित्वोपगमात् । एवं श्वेताश्वतरोपनिषद्वाक्येन सर्वलिङ्गं स्थापयतीत्यस्य विधित्वव्याघात आशङ्कितुं न शक्यते, तथापि सामान्यविशेषभावापन्नार्थबोधकत्वेन परस्परापेक्षितार्थकत्वमेव व्यवस्थापयितुं विधित्वव्याघात-शङ्कोत्थापनमिति मन्तव्यम् ।

जानवरों के पाँच-पाँच नाख़ून होते हैं । इस प्रकार के पाँच नाखूनों से विशिष्ट जानवरों का भक्षण करना चाहिए अथवा नहीं ? इस प्रकार का सन्देह होने पर इन खरगोश आदि पाँच मृगों का ही भक्षण करना है, दूसरों का नहीं। इस प्रकार का निषेध ही इस परिसंख्या विधि का उदाहरण है ।

प्रकृत स्थल में लिंगधारण तो इन तीन प्रकार की विधियों से किसी भी प्रकार से सिद्ध नहीं हो पाता । माना जाय कि अपूर्व विधि से इस लिंगधारण की सिद्धि होगी, किन्तु तब इसे तैत्तिरीय वाक्य को छोड़ कर दूसरे किसी उपनिषत् वाक्य से नहीं निर्दिष्ट होना चाहिए । यहाँ तो अन्य भी अनन्त श्रुतियाँ इस लिंग धारण का विधान कर रही हैं । जैसा कि श्वेताश्वतर श्रुति कहती है—शिवः = लिंगरूप शिव, सर्व = समस्त भक्तों के, आननः = मुख में, शिरः = शिर पर, ग्रीवः = गरदन पर, इष्टलिंग के रूप में धारण करने योग्य है । सर्वभूतगुहाशयः = समस्त प्राणियों के हृदयकमल में प्राणलिंग के रूप से रह रहा है । च = और, सर्वव्यापी = वस्तुपरिच्छेद, कालपरिच्छेद और देशपरिच्छेद से रहित है, अर्थात् सर्वव्यापक है । तस्मात् = इसलिए भगवान् = अणिमा आदि ऐश्वर्यों से विशिष्ट होकर, सर्वगतः = आकाश की तरह सभी वस्तुओं में है ।

नाम् आननशिरोग्रीवा अधिकरणं यस्य सः सर्वाननशिरोग्रीवः, धार्यमाणः सन् तत्रेष्टलिङ्गरूपेण स्थितः शिव इत्यर्थः । सर्वभूतगुहाशय इत्यस्य सर्वभूतानां गुहायां दहरपुण्डरीके शेते "लिङ्गे सुषुप्तिः" (हं. उ. २) इति पूर्वोदाहृतहंसोपनिषत्प्राप्तलिङ्गरूपः शिवोऽन्तर्लिङ्गरूपेण स्थित इत्यर्थः । सर्वव्यापीति त्रिविधपरिच्छेदरहितः । अत एव सर्वगत इति ।

नन्वत्र "सर्वाननशिरोग्रीवः" (श्वे. उ. ३।११) इत्यस्य स्वविशेष्यभूतशिवपदेन समानविभक्तिकत्वात् तस्य चाभेद-

---

आननशिरोग्रीवम् अधिकरणं यस्येति । प्राण्यङ्गत्वादेकवद्भावः । सर्वाननशिरोग्रीवम् अधिकरणत्वेनाऽस्ति यस्येति मत्वर्थीयाच्प्रत्ययान्तत्वाभिप्रायेणेदं व्याख्यानं बोध्यम् । बहुव्रीहिसमासत्वं तु न भ्रमितव्यम्, अधिकरणपदस्याभावात्, उत्तरपदलोपस्य च शाकपार्थिवादितत्पुरुषे प्रादिभ्यो धातुजस्य वा केवलं विधानात् । हंसोपनिषत्प्राप्तेति । तद्बोधितेत्यर्थः ।

त्रिविधपरिच्छेदरहित इति । परिच्छेदस्य तिस्रो विधाः—कालपरिच्छेदो देशपरिच्छेदो वस्तुपरिच्छेदश्चेति । कालपरिच्छेदो यथा—"शतायुर्वै पुरुषः" इति । देशपरिच्छेदः—"शतयोजनविस्तीर्णो मकरालयः" इति । वस्तुपरिच्छेदो यथा—इदं पार्थिवमिदं जलीयमिति । एतैस्त्रिविधपरिच्छेदै रहितः । एतावत्कालवृत्तिः, एतावद्देशवृत्तिः, एतद्वस्तुमात्रस्वरूप एवंरूपेण यो वक्तुं न शक्यते, अर्थात् सार्वकालिकसर्वदेशवृत्तिसर्ववस्त्वात्मकः शिव इत्यर्थः । अयमत्र निष्कर्षः—प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं कालपरिच्छेदशून्यत्वम्, अत्यन्ताभावाप्रतियोगित्वं देशपरिच्छेदशून्यत्वम्, भेदाप्रतियोगित्वं वस्तुपरिच्छेदरहितत्वमिति ।

सर्वाननशिरोग्रीव इत्यत्रार्शआद्यजन्तत्वाद्यजानान आधाराधेयभावसम्बन्धेन शिवपदार्थेऽन्वयादुक्तार्थलाभाभिप्रायं मन्यमानः शङ्कते—

**आक्षेप**—इस वाक्य में 'सर्वाननशिरोग्रीवः' ऐसा लिखा गया है । यहाँ पर 'सर्वेषां शिवभक्तानाम् आननशिरोग्रीवम् अधिकरणं यस्य' इस अधिकरण बहुव्रीहि समास का समाश्रय लेकर कण्ठ में लिंगधारण, 'सर्वभूतगुहाशयः' यहाँ पर 'सर्वेषां भूतानां गुहायां शेते' इस सप्तमी तत्पुरुष समास से प्राणलिंगधारण, 'सर्वव्यापी च'

**बोधनियामकत्वेन कथं भेदगर्भीकृताधिकरणताप्रतीतिरिति चेत् ? मैवं मंस्थाः, समानविभक्तिकयोरप्यधिकरणताप्रत्यायकत्वस्य "आनन्दमयोऽभ्यासात्" (१।१।१२) इत्यधिकरणे नीलकण्ठाचार्यचरणैरङ्गीकृतत्वात् । तत्र च मयटः प्राचुर्यार्थ-**

---

नन्वत्रेति । कथमिति प्रथमान्तपदयोरभेदातिरिक्तसम्बन्धेनान्वयबोधजनकताया अव्युत्पन्नत्वादिति भावः । भेदगर्भीकृत इति । स्वस्मिन् स्वनिरूपिताधेयताया बाधितत्वाद् अधिकरणाधेययोर्भेदस्य नियमेनापेक्षकत्वमेवाधिकरणताया भेदगर्भितत्वं बोध्यम् । भ्रान्तस्य प्रश्नकर्तुर्ज्ञानानुसारेणैवोत्तरमाह—मैवं मंस्था इत्यादिना । वस्तुतस्तु सर्वाननशिरोग्रीव इत्यस्यार्शआद्यजन्ततयाऽभेदसम्बन्धेनाऽन्वस्यैव स्वीकारात् स्वमते आधाराधेयभावसम्बन्धेनान्वय एव नास्तीति नास्त्येवानयोः शङ्कासमाधानयोरवसरः । अच्प्रत्ययश्च षष्ठ्यर्थे कार्यः, आधेयतासम्बन्धस्य वृत्त्यनियामकत्वात् । नील-

यहाँ पर 'सर्वं व्याप्नोतीति' इस द्वितीया तत्पुरुष समास से भावलिंगधारण नामक लिंग का धारण बतलाया गया है। इसी तरह से श्रीरेणुक भगवत्पादाचार्य ने कहा है कि श्रीगुरु वेधा, क्रिया और मनु नामक तीनों दीक्षाओं से आणव, मायीय और कार्मिक नामक तीनों मलों को निवारण करके इष्ट, प्राण और भाव नामक तीन लिंगों को धारण करने की आज्ञा देते हैं। इस तरह से तैत्तिरीय के "सर्वलिङ्गं स्थापयति" इस वाक्य से निरूपित इष्टलिंगधारण श्वेताश्वतर आदि में सिद्ध हो जाता है। इसलिए अप्राप्तत्वरूप अपूर्व विधि में लिंगधारण की सिद्धि नहीं हो सकती । 'सर्वानन' इस मन्त्र का अन्तिम शिवपद यहाँ विशेष्य है, शेष सभी पद विशेषण हैं। सभी विशेषणपद विशेष्य के अधीन होकर रहते हैं। विशेष्य और विशेषण पद एक ही विभक्ति के होने पर अभेद अर्थ मान लेना है, ऐसा शास्त्र का नियम है। यहाँ पर एक ही विभक्ति से विशिष्ट सर्वाननशिरोग्रीव पद और शिव पद है। इसलिए अभेद अर्थ स्वीकार करने पर आधार और आधेय भाव को समर्थन करने वाले अधिकरण बहुव्रीहि समास का आश्रय नहीं ले सकते, तब तो 'सर्वाननशिरोग्रीवः' यह पद इष्टलिंगधारणपरक है, ऐसा कहने का अवकाश ही नहीं मिलता ।

**समाधान**—समान विभक्ति के स्थान पर भी पूर्वाचार्यों ने अधिकरणार्थ स्वीकार कर लिया है। ब्रह्मसूत्र के भाष्यकार श्रीनीलकण्ठ शिवाचार्य ने "आनन्द-

**कत्वस्वीकारेणानन्दब्रह्मणोर्धर्मधर्मिभावप्राप्तौ "आनन्दो ब्रह्मेति व्यजानात्" (तै. उ. ६।६) "विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्य-गतानन्दब्रह्मपदयोरेकविभक्तिकत्वेनाभेदबोधनात् कथं धर्म-धर्मिभाव इति पूर्वपक्षं प्रापय्य "आनन्दो ब्रह्मणो रूपम्" इत्यादिभेदबोधकवाक्याविरोधेन आनन्दाधिकरणं ब्रह्मेति राद्धान्तितम् ।**

---

कण्ठाचार्यचरणैरिति। अयं भावः—विशिष्टाद्वैतसिद्धान्ते "आनन्दमयः", "आनन्दो ब्रह्मणो रूपम्" इत्यादौ मयटः षष्ठ्यादिदर्शनेनानन्द-ब्रह्मणोर्भेदस्यैवोपगमेनानन्दो ब्रह्मेति व्यजानादित्यत्र समानविभक्तिकविशेष्य-विशेषणवाचकपदसमभिव्याहारस्थलेऽपि क्वचिद् भेदः प्रतीयत इत्यभ्युप-गन्तव्यं भवति। यद्यपि प्रकृतेऽप्यानन्दपदस्यार्शआद्यजन्तत्वस्य स्वीकारेण स्वाश्रये लक्षणाया एवोपगमेन वाऽभेदसम्बन्धेनान्वयेऽपि नास्ति बाधः, तथापि च्छन्दसि "व्यत्ययो बहुलम्" इति शास्त्रेण सप्तम्यर्थेऽपि प्रथमाया विधानेना-ऽनायासत एव समानविभक्तिकस्थलेऽप्याधाराधेयभावो लभ्यत इति किमर्थमर्शआद्यजन्तताऽऽश्रये लक्षणा वा स्वीकरणीयेत्याशयेन नीलकण्ठाचार्यै-रेवमुक्तम्। वस्तुतस्तु नीलो घट इत्यादिलोकसाधारणेनोपायेनोपपत्तौ छान्दसत्वेन व्यत्ययकल्पनया समाधानस्यान्याय्यतया तत्र च गुणवचनेभ्यो मतुपो लुगिष्ट इति महाभाष्योक्तप्रक्रियया नैयायिकोक्तलक्षणया वा आश्रयबोध

मयोऽभ्यासात्" इस सूत्र में आत्मा अभ्यासात् = निरन्तरलिंगोपासना से, आनन्द-मयः = आनन्दप्रचुर होता है। यहाँ पर आनन्द शब्द के आगे मयट् प्रत्यय आया है। इस प्रत्यय का विकार या प्राचुर्य अर्थ कह सकते हैं। इन दो अर्थों में से श्रीनीलकण्ठ शिवाचार्य आनन्द और ब्रह्म का गुणगुणिभाव मानते हैं। अतः वे यहाँ विकारार्थ को न मानकर प्राचुर्यार्थ को स्वीकार करते हैं। इससे शिवयोगाभ्यास से अंगपदवाच्य जीवात्मा आनन्दप्रचुर हो गया है, ऐसा सिद्ध हो जाता है। इसके लिए उसी आनन्दाधिकरण में "विकारशब्दान्नेति चेन्न प्राचुर्यात्" अर्थात् मयट् प्रत्यय की विकारार्थता स्वीकार करने पर मृण्मय घट मृद्विकार हो जाता है, ऐसे ही आनन्दमय आत्मा आनन्दविकार हो जाता है, इस प्रकार कहना होगा। परमेश्वर के लिए ऐसा विकार कहने का अवसर न मिलने से वह जीवात्मा ही है, ऐसा कहना भी सम्भव नहीं है। यहाँ पर आनन्द शब्द से आगे के मयट् प्रत्यय से हम प्राचुर्यार्थ को ही स्वीकार करते हैं। इसीलिए तैत्तिरीय वचन में अन्नमय शब्द से

**भेदवादिभिरानन्दतीर्थीयादिभिरपि—"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" (मु. उ. १।१।९) इति वाक्यविरोधेन**

---

इति सर्वैरेव ग्रन्थकारैः स्वीकृतत्वेनात्रापि मत्वर्थीयाच्प्रत्ययेनाश्रयबोधः स्वीकरणीय इत्येव युक्तम्, नीलकण्ठाचार्याणामुक्तिस्तूपायस्योपायान्तरादूषकत्वमात्राभिप्राया।

यः सर्वज्ञः सर्वविदिति। "यस्य ज्ञानमयं तपः" इति वाक्याविरोधाय "विज्ञानं ब्रह्म" इत्यत्र विज्ञानाधिकरणं ब्रह्मेत्यानन्दतीर्थीयव्याख्यानमप्येवमेव

मनोमय शब्द पर्यन्त के मयट् प्रत्ययों से विकारार्थ को स्वीकार करके इससे आगे के विज्ञानमय, आनन्दमय पदों को प्राचुर्यार्थक मानकर विज्ञानप्रचुर जीव है और आनन्दप्रचुर ईश्वर है, ऐसा अर्थ करते हैं। इसी प्रकार "अन्नमयो यज्ञः, अंशुमयः सूर्यः, विप्रमयो ग्रामः, विहङ्गमयो वृक्षः" इस प्रकार के अनेक स्थानों में मयट् को प्राचुर्यार्थक बताया गया है। इस प्रकार कहने से परशिव भूतभविष्यद्वर्तमान कालों में होने वाले दुःखों में से किसी एक से भी सम्बद्ध न होकर सत्य और प्रकाशमय होकर रहता है, इस वास्तविकता की सिद्धि हो जाती है। तापत्रयग्रस्त जीवात्मा में इस प्रकार के नित्यानन्द की सिद्धि नहीं हो पाती। इससे आनन्द और ब्रह्म का धर्मधर्मिभाव सिद्ध हो जाता है। ऐसा मानने पर "आनन्दो ब्रह्मेति व्यजानात्", "नित्यं ज्ञानमानन्दं ब्रह्म" इस प्रकार के अनन्त श्रुतिवाक्यों में एक ही विभक्ति के वाक्य आने से उस आनन्द और ब्रह्म के अभेद को स्वीकार न करके भेदप्रतिपादक धर्मधर्मिभाव कहने का अवसर नहीं है, ऐसा आक्षेप करने पर "आनन्दो ब्रह्मणो रूपम्" इस प्रकार श्रुतियों में षष्ठ्यन्त ब्रह्मपद होने से आनन्द और ब्रह्म का अत्यन्त भेद दीखने से भेद वाक्यों का विरोध आवश्यक होने से "आनन्दो ब्रह्म" यहाँ के समानविभक्तिक ब्रह्म पद को आनन्दार्थक स्वीकार करके 'आनन्दाधिकरणं ब्रह्म' ऐसा समर्थन करने पर "आनन्दो ब्रह्मणो रूपम्" इस प्रकार के भिन्नविभक्तिक वाक्यों का और समानविभक्तिक वाक्यों का विरोध न होकर समन्वय हो जाता है, ऐसा कहते हैं।

इस सन्दर्भ में "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" अर्थात् जो सर्वज्ञ है, सर्ववेत्ता है, जिनका तप ज्ञानमय है, इस प्रकार के विभिन्न विभक्तियों से विशिष्ट श्रुतिवाक्य भेद को बतला रहे हैं। "विज्ञानं ब्रह्म", "आनन्दं ब्रह्म" इस प्रकार के समानविभक्ति वाले श्रुतिवाक्य अभेद भी दिखला रहे हैं। इन श्रुतिवाक्यों में परस्पर विरोध दीखने के कारण समानविभक्तिक आनन्द, विज्ञान आदि पदों की

"विज्ञानं ब्रह्म" (तै. उ. ३।५) इत्यत्र विज्ञानाधिकरणं ब्रह्मेत्युक्तम् । लौकिकेऽपि बहुकपालो घट इत्यादौ तथा दृष्टमिति ।

न चाननशिरोग्रीव इत्यस्याननशिरोग्रीवमात्राधिकरणकलिङ्गार्थकत्वे तस्मात् सर्वगतः शिव इति वाक्यविरोध इति वाच्यम्, भक्तानुग्रहार्थमौपाधिकपरिच्छिन्नेष्टलिङ्गरूपेणानन-

---

बोध्यमिति सर्वमनवद्यम् । बहुकपालो घट इत्यादाविति । वृक्षे शाखेतिवद् लोकदृष्ट्यनुसारेणावयविन्यवयवनिरूपिताधिकरणत्वमारोप्य बहुकपालाधिकरणो घट इति बोधः । तथा दृष्टमिति । समानविभक्तिकस्थलेऽप्याधाराधेयभावसम्बन्धेनान्वयो दृष्ट इति भावः। यद्यप्यत्र बहुव्रीहिणैव तादृशबोधो निर्वहति, तथाप्येकार्थीभावानङ्गीकर्तृमते उत्तरपदेऽन्यपदार्थलक्षणाया एव स्वीकारेण तत्स्थानीयकल्पान्तरस्याप्यवसरोऽस्तीत्याशयेनैवमुक्तम् ।

वाक्यविरोध इति । परिच्छिन्नत्वमपरिच्छिन्नत्वं चैकस्मिन्न सम्भवतीति तयोरेकत्रोक्तिर्बाधिता भवतीति भावः। भक्तानुग्रहार्थमिति । तथा च अधिकरणार्थता स्वीकार करके सभी वाक्यों का समन्वय करके विरोध परिहार कर लेना उत्तम समझ कर जीव और ब्रह्म के भेद को बताने वाले श्री आनन्दतीर्थ समान विभक्ति के स्थान पर अधिकरणार्थ स्वीकार करते हैं। इसी प्रकार 'सर्वाननशिरोग्रीवः' यह प्रथमान्त पद 'सर्वगतः शिवः' इस आगे के प्रथमान्त पद का विशेषण है। इस विशेषण पद का, समस्त भक्तों के शिर, कण्ठ आदि स्थान ही अधिकरण (आश्रय) हैं, ऐसे भिन्नार्थ को बतलाने वाले व्यधिकरण बहुव्रीहि समास का आश्रय लेकर कण्ठ में इष्टलिंग को धारण करे, ऐसा निर्णय कर लेना चाहिये ।

**आक्षेप**—लेकिन इस प्रकार परिच्छिन्नत्वबोधक अधिकरणार्थ को स्वीकार कर शिवभक्त अपने कण्ठ आदि अवयवों में शिवलिंग को धारण करे, ऐसा अर्थ करने पर आगे के अपरिच्छिन्नत्वबोधक वाक्य का विरोध होता है। एक ही वस्तु में भेद और अभेद दोनों नहीं रह सकते। इसलिए इष्टलिंगधारण की सिद्धि के लिए 'सर्वाननशिरोग्रीवः' इस वाक्य की अधिकरणार्थता स्वीकार नहीं की जा सकती ।

**समाधान**—परशिव अपरिच्छिन्न वस्तु है, ऐसा सभी सिद्धान्ती स्वीकार करते हैं, तो भी वह परशिव उपासक भक्तों का उद्धार करने के लिए उपाधिस्वरूप

शिरोग्रीवासु सूक्ष्मज्योतिर्लिङ्गरूपेण गुहारूपदहराम्भोजे पूर्व-वाक्येन स्थितिं प्रदर्श्य वास्तविकापरिच्छिन्नरूपप्रदर्शनपरः "सर्वव्यापी च भगवान्" इत्युत्तरवाक्यसन्दर्भ इति योजयितुं शक्यत्वात् । अत एव पूर्ववाक्यावगतपरिच्छिन्नरूपसमुच्चयार्थः "सर्वव्यापी च भगवान्" इत्यत्र चकारः सार्थकः ।

अथैवमपि—"उत्तमाङ्गे गले वापि कुक्षौ वक्षस्थलेऽपि वा । तथा हस्ततले वापि प्राणलिङ्गं धरेत् सुधीः ॥" (६।५१) इति सिद्धान्तशिखामणिवचनेन "कृत्वा निधेहि सततं लिङ्गं वस्त्रेण वेष्टितम् । मस्तके कन्धरे कुक्षौ वक्षस्यथ करस्थले ॥" इति स्कान्दे शङ्करसंहितावचनेन च शिरो-

---

वस्तुतोऽपरिच्छिन्न एवेश्वरो भक्तानुग्रहार्थं स्वेच्छया परिच्छिन्नरूपं परिकल्प्या-धितिष्ठतीति परिकल्पितरूपगतमेव परिच्छिन्नत्वम्, अपरिच्छिन्नत्वं चात्मगत-मिति न कश्चिद् विरोध इति भावः ।

इष्टलिंग के रूप में शिवभक्तों के मुंह में, मस्तक पर, कण्ठ पर निवास करता है । ज्योतिर्लिंग के रूप में भक्तों के हृदय-पुण्डरीक में रहता है । इस प्रकार एक एक कल्पित रूप से भक्तों के हृदय में निवास करने पर भी वह आकाश की तरह सर्वव्यापक होकर रहता है । इस अभिप्राय को पुष्ट करने के लिए "सर्वानन-शिरोग्रीवः, सर्वभूतगुहाशयः, सर्वव्यापी स भगवान्" इन तीन वाक्यों द्वारा क्रम से इष्टलिंग, प्राणलिंग और भावलिंग को दिखलाने से परिच्छिन्नत्व और अपरिच्छिन्नत्व का विरोध नहीं रहेगा । भक्तों की उपासना के सौकर्य को ध्यान में रखकर शिव का पहले कल्पित रूप बतला कर आगे निजस्वरूप के रूप में स्वीकृत अपरिच्छिनत्व को बताने के उद्देश्य से यह श्रुति अन्त में 'सर्वव्यापी च' इस प्रकार के समुच्चयार्थक चकार का उपादान करती है, अतः 'सर्वानन-शिरोग्रीवः' यह पद इष्टलिंगधारणपरक है, यह हम निश्शंक होकर कह सकते हैं ।

इस विषय पर—"दीक्षित शिवभक्त गुरु के द्वारा प्रसादित पञ्चसूत्र से घटित शिवलिङ्ग को शिर, कण्ठ, छाती, वक्षस्थल व भुजा (हाथ) पर धारण करना चाहिए" ऐसी श्रीरेणुक भगवत्पादाचार्य की आज्ञा है । शिर, कण्ठ, छाती, पेट, हाथ—इन पांच स्थलों में शिवलिंग को धारण करना चाहिए, इस प्रकार व्यास जी के द्वारा लिखित स्कन्दपुराण में भी कहा गया है ।

ग्रीवे लिङ्गधारणप्रसिद्धावप्यानने तदभावात् कथमेतदित्यनाकलितरमणोयम्, "मननात् त्रायते यस्मात् तस्मान्मन्त्रोऽयमोरितः। वाच्यवाचकरूपेण द्विधा मन्त्रः प्रकोर्तितः ॥ वाचको वर्णरूपः स्याद् वाच्यश्च परमः शिवः। मनुदेवतयोरैक्यं तस्मादाहुर्महर्षयः॥" इति व्यासनिरुक्त्या, "नमः पोठमिति प्रोक्तं शिकारं मध्यमोरितम् । वाकारं गोमुखं वृत्तं यकारं गोलकं स्मृतम् । ओङ्कारं लिङ्गमाख्यातं षड्वर्णं लिङ्गमुच्यते ॥" इति सिद्धा-

---

नमः पीठमिति। लिङ्गस्याधारभूतं योनिमण्डलाद्यवयवकं पीठमित्युच्यते। तद्रूपत्वं मन्त्रावयवे नमःशब्दे आरोप्यते। मध्यरूपत्वं मन्त्रावयवे शिशब्दे आरोप्यते। गोमुखपदेन तदन्तर्गतं जलप्रवहणमुच्यते, तद्रूपत्वं वाशब्दे आरोप्यते। गोलकपदेन लिङ्गाधारभूतं विवरं कथ्यते, तद्रूपत्वेन मन्त्रावयवो यकारः कल्प्यते। ॐकारश्च लिङ्गरूपेण कल्प्यते। एवं लिङ्गमन्त्रयोरेकत्वसिद्धौ मन्त्ररूपेणाऽऽननवृत्तित्वात् सर्वाननशिरोग्रीवेत्यत्राननस्य शिवधारणस्थानत्वोक्तिर्न विरुद्ध्यत इति भावः।

ननु—"उत्तमाङ्गे गले वापि कुक्षौ वक्षस्थलेऽपि वा। तथा हस्ततले वापि प्राणलिङ्गं धरेत् सुधीः॥" इति वाक्येन लिङ्गधारणाधिकरणत्वेन बहूनां

**आक्षेप**—ऐसा मानने पर 'सर्वाननशिरोग्रीवः' इस वाक्य में मुंह, शिर, कण्ठ—ये तीन स्थान बताने पर भी ऊपर बताये गये प्रमाण के अनुसार उपलक्षणात्मक विधि से पेट, छाती और हाथ इन तीनों का ग्रहण कर लेना है। इस मन्त्र में 'सर्वानन' ऐसा एक आनन पद मिला है। शिवलिंग को कण्ठ आदि पाँच स्थानों पर जैसा धारण कर सकते हैं, वैसा आनन (मुंह) में धारण करना साध्य नहीं है, इसलिए यह उपयुक्त नहीं है।

**समाधान**—युक्ति से ध्यान करने का नाम मनन है। ऐसे मनन के द्वारा रक्षा करने योग्य होने से मन्त्र कहा जाता है। वह रक्षक मन्त्र वाचक (शब्द) और वाच्य (अर्थ) के भेद से दो प्रकार का है। इनमें अक्षरस्वरूप वाचक मन्त्र है और अर्थ (लिंग) के रूप में वह वाच्य मन्त्र कहा जाता है। इस प्रकार के अक्षरस्वरूप (नमः शिवाय) वाचक पद और अर्थ रूप (परशिव) वाच्य पद का महर्षियों ने अभेद माना है।

**तात्पर्य**—सिद्धान्तसारावली के अनुसार महामन्त्र के पहले 'नमः' यह दोनों अक्षर शिवलिंग के पीठ हैं। 'शि' यह उस लिंग का मध्यभाग है। 'वा' यह उस

न्तसारावलीवचनेन च पञ्चाक्षरीमन्त्रलिङ्गयोरैक्येन मन्त्ररूपेणानने लिङ्गरूपेण शिरोग्रीवयोरधिष्ठित इति वक्तुं शक्यत्वात् ।

अत्र च—"व्रीहिभिर्यजेत, यवैर्यजेत" (आप. श्रौ. ६।३१ १३) इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन यथा विकल्पः, तद्वत् कदाचिच्छिरसि कदाचिद् ग्रीवादिषु वा धार्यमित्यवगन्तव्यम् ।

---

स्थानानामुक्तेः किं सर्वत्र तद्धारणं कर्तव्यमाहोस्वित् क्वचिदेवेत्याशङ्क्य समाधत्ते—अत्र च व्रीहिभिरिति । प्रयोजनस्यैकत्वेनेति । तथा च व्रीहियवयोः पुरोडाशनिष्पादनस्येवोत्तमाङ्गादिषु लिङ्गधारणानां मोक्षरूपस्य प्रयोजनस्यैकत्वमस्तीति भावः । समानफलकत्वादैच्छिको विकल्प एवात्र स्थानानामस्तीत्यवगन्तव्यम् ।

लिंग का गोमुख है । 'य' यह गोलक है । 'ओं' यह लिंग है । इस तरह से पीठ, मध्य, गोमुख, वृत्त और गोलक नामक पाँच सूत्रों से विशिष्ट लिंग और वर्णरूप पंचाक्षरी मन्त्र का यहाँ अभेद मान लिया गया है ।

इसलिए वाचकरूप मन्त्र को मुंह में और वाच्यरूप मन्त्र (इष्टलिंग) को हस्त, कण्ठ आदि स्थानों में धारण करने के गूढार्थ को दिखलाने के लिए श्रुति 'सर्वाननशिरोग्रीवः' ऐसा उपदेश करती है ।

**शङ्का**—इस सर्वानन वाक्य से कण्ठ, शिर, कुक्षि आदि पाँच स्थानों में लिंग धारण करना चाहिए, ऐसा कहने के बाद इन पाँचों स्थानों में अलग-अलग एक-एक लिंग धारण करना है ? अथवा किसी एक स्थान पर लिंग धारण करना है ?

**समाधान**—श्रुति में धान से यज्ञ करें, जौ से यज्ञ करें । इस प्रकार दो वाक्य बताये गये हैं । इन दोनों वाक्यों का पुरोडाश (लीटी-बाटी) उत्पादनरूप प्रयोजन तो एक ही है । अतः धान से याग करने के बाद जौ से करने की आवश्यकता नहीं है, जौ से याग करने के बाद धान से करने की जरूरत नहीं है । ऐसा निर्णय किया गया है । उसी प्रकार यहाँ पर भी इष्टलिंग धारण से मोक्षरूप महाफल की प्राप्ति हो जाने से उस लिंग को शिर, छाती या अन्य किसी स्थान पर धारण करने पर भी मोक्षरूप प्रयोजन एक ही होने के कारण इन पाँच स्थानों में से किसी एक स्थान पर धारण करना है, न कि सभी स्थानों पर । श्रुति कहती है—प्रधानं =

**अपि चास्यामुपनिषदि "क्षरं प्रधानममृताक्षरं हरः" (श्वे. उ. १।१०) इति परमेश्वरमुपक्रम्य "लिंगधारणमाख्यातं द्विधा सर्वार्थसाधकम्। बाह्यमाभ्यन्तरं चैव मुनिभिर्मोक्षकाङ्क्षिभिः ॥ आधारे हृदये वापि भ्रूमध्ये वा निरन्तरम्।**

---

क्षरं प्रधानमिति। प्रधानं प्रकृतिपदवाच्यं साम्यावस्थापन्नं गुणत्रयं क्षरं विकारि। अमृताक्षरं हर इति। हरः परमेश्वरः, अमृतम् अनश्वरम्, अक्षरम् अविकारी प्रणवप्रतिपाद्यो वा। उपक्रम्य प्रस्तूय। आधारे नाभिचक्रे।

सत्त्वरजतमोगुणस्वरूपवाली माया, क्षरं = नाश होनेवाली है। हरः = परशिव, अमृत = नाशरहित और अक्षरं = विकारशून्य है। तस्य = उस दिव्य ज्योतिस्वरूप परशिव को, अभिध्यानात् = प्राणलिंग मानकर सूक्ष्म शरीर में धारण करने से, योजनात् = इष्टलिंग मानकर स्थूल शरीर में धारण करने से, तत्त्वभावात् = भावलिंग मानकर कारण शरीर में धारण करने से, भूयः = निश्चय ही, अन्ते = देह का वियोग होने के बाद, विश्वमायानिवृत्तिः = जननमरणरूप दुःख से मुक्त हो जाता है। इस श्वेताश्वतर वाक्य में 'योजनात्' यह पद देह में केवल इष्टलिंग धारण को बतला रहा है। लेकिन किस स्थान पर धारण करना है, इस बात को तो स्पष्ट नहीं किया गया है। उस स्थान को स्पष्ट करने के लिए 'सर्वाननशिरोग्रीवः' यह वाक्य आया है। इसके अतिरिक्त 'सर्वभूतगुहाशयः' यह वाक्य प्राणलिंग धारण के स्थान को बताता है। इष्टलिंग के धारण का स्थान न बताने पर प्रकरण का विरोध होगा। इस दोष का परिहार सिद्धान्तशिखामणि में किया गया है— मोक्ष को चाहनेवाले मुनि लोग लिंगधारण का बाह्यलिंगधारण और अन्तर्लिंगधारण के भेद से दो प्रकार का बताते हैं। इनमें से आधार, हृदय और भ्रूमध्य स्थान पर ज्योतिर्लिंग का निरन्तर ध्यान करना ही अन्तर्लिंगधारण है। अन्तर्लिंग को धारण करने को शक्ति न होने पर बाहर के इष्टलिंग को अन्तर्लिंग का ही स्वरूप मानकर हाथ, गले आदि उत्तम अंगों में निरन्तर धारण करना चाहिए।

'सर्वाननशिरोग्रीवः' यह पद शिवपद का विशेषण है, अतः शिव आनन, शिर और कण्ठ आदि से अभिन्न है? अथवा भिन्न है? इस प्रकार का विकल्प हो सकता है। अभेद को स्वीकार करने पर "सर्वं वाक्यं सावधारणम्" इस न्याय से शिव आनन, शिर और कण्ठ की केवल अभिन्नता है, ऐसा कहना पड़ेगा। तब शिव सभी जगह हैं, इस श्रुति वाक्य का विरोध होगा। भेद को मानने पर दायीं

**ज्योतिर्लिङ्गानुसन्धानं तदेवान्तरमुच्यते ॥ "अन्तर्धारयितुं लिङ्गमशक्तः शक्त एव वा। बाह्यं च धारयेल्लिङ्गं तद्रूपमिति निश्चयात्" (६।२९,३८,४७) इति सिद्धान्तशिखामणिवचन-प्राप्तमुभयविधधारणमपि — "तस्याभिध्यानाद्योजनात्तत्त्वभा-वात्"(श्वे.उ. १।१०)इत्यनेन तस्याभिध्यानाद् ज्योतिर्लिङ्गरूपे-णान्तरमनुध्यानात् योजनादिष्टलिङ्गरूपेण संयोगादिति प्रदर्श्य कुत्र धर्तव्यमित्याकाङ्क्षायां धारणाधिकरणप्रदर्शनार्थं प्रवृत्त-मिदं "सर्वाननशिरोग्रीवः" (श्वे. उ. ३।११) इत्यादिवाक्यम्। तत्र गुहाशय इत्यन्तर्लिङ्गधारणस्थानं प्रदर्श्य बहिर्लिङ्गधारण-स्थानाप्रदर्शने सन्दर्भविरोधो वज्रलेपायते।**

---

ज्योतिर्लिङ्गानुसन्धानं ज्योतिर्मयस्य लिङ्गस्य अनुसन्धानं स्मरणमेवान्त-र्लिङ्गधारणं कथ्यत इत्यर्थः। तद्रूपमिति ज्योतिर्मयशिवस्वरूपमिति निश्चयादेतादृशं निश्चयं प्रगृह्येति ल्यब्लोपे पञ्चमी। सिद्धान्तशिखामणि-वचनप्राप्तमिति। एतद्ग्रन्थस्याप्येतन्मतेऽत्यन्तमभ्यर्हितत्वेनैतदीयवचनबलात् कर्तव्यतया प्राप्तमुभयविधलिङ्गधारणं तन्मूलभूतश्रुत्यापि बोधितमस्तीति भावः। अनुध्यानात् चिन्तनात्। एवं श्रुत्या द्विविधलिङ्गधारणं विहितत्वेन व्याख्याय क तत् धर्तव्यमिति स्थानापेक्षायां प्रवृत्तं सर्वाननशिरोग्रीव इति वाक्यं गुहाशय इत्यंशेनान्तर्लिङ्गधारणाय बुद्धिरूपां गुहां प्रदर्श्य सर्वाननशिरो-ग्रीव इत्यंशेन बाह्यलिङ्गधारणस्थानं प्रदर्शयतीति सर्वं समञ्जसं भवति। अन्यथाऽपेक्षितयावदंशाकथनेन प्रकरणस्य न्यूनत्वं सर्वाननेत्यंशस्य वैयर्थ्यं चेत्येतदाशयः।

आँख से देखता है, इस गाँव में क्षत्रिय (ठाकुर) धनिक है। इन स्थानों पर अवधारणात्मक एवकार के न होने पर भी दायीं आँख से ही देखता है, इस गाँव में केवल क्षत्रिय ही धनिक है, इस प्रकार का निर्णय हो जाता है। ऐसे ही शिव मुंह और कण्ठ में मात्र रहता है, इसके अतिरिक्त किसी स्थान पर नहीं रहता, इस प्रकार कहना होगा। ऐसा कहने पर 'सर्वानन' वाक्य के अन्त में शिव सभी स्थानों में रहता है, इस वाक्य का अर्थ निरर्थक होगा और वह सर्वव्यापक ब्रह्मलिंग हस्त, कण्ठ आदि इने-गिने स्थानों में रहता है, ऐसा कहने पर उस ब्रह्म का संकोच कहना होगा। इससे सर्वानन, सर्वभूत, सर्वगत यह तीन वाक्य क्रम से इष्टलिंग, प्राणलिंग और भावलिंग को बता रहे हैं, ऐसा कहना ही ठीक होगा। इस अर्थ

**यद्येवं नाङ्गीकरोषि, तदा सर्वाननशिरोग्रीव इत्येतन्निरर्थकमेव स्यात् । तथा हि—अनेन वाक्येन शिवस्याननशिरोग्रीवाभेदो विधीयते, आहोस्वित् तद्वृत्तित्वम् ? नाद्यः, सर्वं वाक्यं सावधारणमिति न्यायेन तावन्मात्राभेदसिद्धौ सर्वो ह्येष रुद्र इति श्रुतिविहितसार्वात्म्यभङ्गापत्तेः । न द्वितीयः, तस्मात् सर्वगतः शिव इति वाक्यापादितसर्वगतत्वरूपब्रह्मलिङ्गस्य सङ्कोचापत्तेः । अस्मन्मते तु सार्थक्यमुक्तमेवेति ।**

---

निरर्थकमेव स्यादिति । सर्वाननशिरोग्रीव इति विशेषणेन सर्वाननाद्यभेदो वा सर्वाननादिवृत्तित्वं वा बोधयितुं न शक्यते, सर्वात्मकत्वसर्वंगतत्वयोरन्यतरस्यावश्यं भङ्गापत्तेर्वामिनाक्ष्णा पश्यतीत्युक्तेरेवकारं विनापि वामेनैव पश्यतीत्यवधारणप्रतीतेरेतादृशस्थल इतरव्यावृत्तिलाभस्यौत्सर्गिकत्वादित्याशयः । तदेवोक्तम्—सर्वं वाक्यं सावधारणमिति । एवमेवास्मिन् ग्रामे क्षत्रियो धनिक इत्युक्तौ क्षत्रिय एवात्र धनिक इत्यादिप्रतीतिरप्युदाहर्तव्या । यद्यपि देवदत्तस्य चत्वारः पुत्राः सन्तीत्यत्र देवदत्तस्यैवेति न प्रतीयते, तथापि बाधनिश्चयोपस्थित्या तदंशेऽवधारणाप्रतीतावपि चत्वार एव सन्त्येवेत्यंशान्तरेऽवधारणप्रतीतिरस्त्येव । स्पष्टं चेदम्—"अथेदानीं गामभ्याज कृष्णां देवदत्त दण्डेन" इत्यत्र सर्वं निर्दिष्टम्—"गामेव कर्म अभ्याजैव क्रिया देवदत्त एव कर्ता" इत्यादिग्रन्थेन एवकारं विनापि तदर्थपरत्वप्रतीतिस्थलप्रदर्शकमहाभाष्ये । तच्चेत्यधिकरणताबोधकपदं चेत्यर्थः । आश्रयलक्षणादिकं तु विना प्रमाणमाश्रयितुं न शक्यत इति भावः ।

को ब्रह्मसूत्र स्पष्ट कर रहा है । वीरशैव भाष्यकार श्रीपति पण्डिताराध्य ने इस सूत्र की त्रिविध लिंगोपासनापरक व्याख्या की है ।

**शङ्का**—"सर्वाननशिरोग्रीवः" इस वाक्य में अधिकरणार्थ को बताने वाले पद के होने पर यह इष्टलिंगधारणपरक है, ऐसा कह सकते हैं । ऐसा कोई पद नहीं दीखता है । इसलिए वह वाक्य ही व्यर्थ होता है न ?

**समाधान**—इस वाक्य में स्पष्ट रूप से अधिकरणार्थ को बताने वाला पद न होने पर भी मत्वर्थीय अच् प्रत्यय करके उस वाक्य को सार्थक बना सकते हैं, क्योंकि पूरे वाक्य को व्यर्थ बनाने की अपेक्षा उस वाक्य में रहनेवाले एक पद में लक्षणा स्वीकार करके उस वाक्य को सफल बनाना उपयुक्त (न्याय्य) है, ऐसा शास्त्रकारों का मत है । अतः "सर्वतोऽक्षिशिरोमुखम्, सहस्रशीर्षा पुरुषः, सर्वतः

**ननु सर्वाननशिरोग्रीव इत्यत्राधिकरणताबोधकपदसत्त्वे सर्वमेतदेवं स्यात्, तच्चात्र नास्तीति चेन्मैवम्, आननशिरोग्रीवा अधिकरणत्वेनास्य सन्तीति मत्वर्थीयाच्प्रत्ययेन एतद्वाक्यवैयर्थ्यपरिहाराय वरं हि वाक्यवैयर्थ्यात् पदमात्रस्य लक्षणेति न्यायेन लक्षणया वा तद्बोधावश्यम्भावात् ।**

**अभ्युपगतं च पूर्वतन्त्रे—"एकादशपशोरवदानानि तानि द्विरवद्यति" (तै. सं. ६।३।१०।३) इत्यत्र पाशुके हविषि**

---

तद्बोधावश्यम्भावादिति । लिङ्गधारणाश्रयप्रतिपादनपरत्वं विना सर्वाननेति वाक्यवैयर्थ्यापत्त्या तद्वाक्यमेवाश्रयलक्षणादौ प्रमाणं भवतीति भावः । वस्तुतः—"सहस्रशीर्षा पुरुषः" (ऋ० १०।९०।१) इतिवत्; "सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्" (भ०गी० १३।१३) इतिवच्च सर्वेषामाननशिरोग्रीवं यस्येति व्यधिकरणबहुव्रीहिणा सर्वात्मकत्वबोधकमेवेदमपीति बोध्यम् ।

अभ्युपगतं च पूर्वतन्त्र इति । वाक्यवैयर्थ्यवारणायैकपदस्य लाक्षणिकत्वं पूर्वमीमांसायां स्वीकृतमस्तीत्यर्थः । तदेव दर्शयति—एकादशेति । पाशुके

पाणिपादम्" इत्यादि स्थानों में व्यधिकरण बहुव्रीहि समास का आश्रय लेकर "सर्वाननशिरोग्रीवः" इस वाक्य को सफल बनाना उत्तम है ।

पशु के ग्यारह अवयवों में से प्रत्येक का दो बार अवदान करना है (आहुति के निमित्त अवयव को लेना), ऐसा पशुप्रधान याग में बताया गया है । पशुयाग तो सोमयाग का विकृति याग (अंग याग) है, अतः जैसा प्रकृति याग किया जाता है, वैसा ही विकृति याग को करना है । चोदना (प्रेरणा) वाक्य होने के कारण अंगी (प्रधान) सोमयाग में बताये हुए वाक्य से ही पशुसम्बन्धी आहुति में द्विरवदान सिद्ध हो जाता है, तो फिर इस अंगभूत पशुयाग में 'द्विरवद्यति' ऐसा क्यों कहा गया ? यह दो बार अवदान बतानेवाला वाक्य व्यर्थ है ? ऐसी शङ्का होने पर मीमांसाशास्त्र में इसका समाधान दिया जाता है कि श्रुति में यागीय पशु के हृदय में रहनेवाली वपा से पाँच बार अवदान करने का विधान है । यहाँ आज्य (घी) के उपस्तरण के लिए एक अवदान, आहुति के लिए तीन अवदान और अभिघार के निमित्त एक अवदान, इस प्रकार पाँच अवदान पूर्ण हो जाते हैं । अब "तानि द्विरवद्यति" यह वाक्य व्यर्थ न होने पावे, इसके लिए वपा पद की पशुसम्बन्धी हविस्सामान्य में लक्षणा स्वीकार करने से पशु के हृदय आदि स्थानों में रहनेवाली

**प्रकृतिवद् विकृतिः कर्तव्येति चोदकेनैव द्विरवदानप्राप्तौ तानि द्विरवद्यतीत्यवदानद्वित्वविधायकवाक्यस्य वैयर्थ्यमिति पूर्वपक्षीकृत्य, "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या" इति वाक्ये वपापदस्य हृदयादिसाधारण्येन पाशुकहविर्मात्रे लक्षणां स्वीकृत्य हृदयादिष्वपि पञ्चावदानसिद्ध्यर्थमुपस्तरणाभिधारयोः सतोरवदानत्रितयप्राप्तौ हविर्द्विरवदातव्यम्,**

---

हविषि श्रूयते—"एकादश पशोरवदादानि तानि द्विरवद्यति" इति। पाशुकयागे पशोरेकादशाङ्गानि तानि प्रत्येकं द्विरवद्यति, तेभ्योऽवदानपूर्वकं वारद्वयं हविरवयवं गृह्णातीत्यर्थः। अस्य च कर्मणः सोमविकृतित्वेन प्रकृतिवद्विकृतिः कर्तव्येति चोदकवाक्येनैवैतदीयहविष्षु द्विरवदानस्य प्राप्ततया द्विरवद्यतीति वाक्यस्य वैयर्थ्यं भवतीति पूर्वपक्षे, अस्मिन्नेव प्रकरणे—"यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या" इति वपायाः पञ्चावदानानि विधीयन्ते। पञ्चावदानस्थले च प्रथमावदानमुपस्तरणार्थमाज्यस्य क्रियते, अनन्तरावदानत्रयं हविषः क्रियते, अन्तिममवदानमभिघारणार्थं पुनराज्यस्यैव क्रियते। एवं पञ्चत्वसंख्या पूर्यते। अत्र तानि द्विरवद्यतीति वाक्यवैयर्थ्यपरिहाराय वपापदस्य पाशुकहविःसामान्ये लक्षणया हृदयादिहविःष्वपि पञ्चावत्त्वं प्राप्नोति। तत्र चोपस्तरणाभिघारणाभ्यां द्वित्वसंख्याया निष्पन्नत्वेन पञ्चत्वसंख्यापूर्तये हृदयादीनां त्रिरवदानं प्राप्नोति। तद्बाधाय तानि द्विरवद्यतीत्युच्यते। तेन हविरवदानेषु पूर्वप्राप्तत्रित्वस्य द्वित्वेन बाधात् पञ्चावत्तैव वपा कार्येति प्राप्तपञ्चत्वसंख्यायाः पूर्तिरुपस्तरणार्थमवदानस्य वारद्वयकरणेनाभिघारणस्य वा वारद्वयकरणेन करणीयेति सिद्धान्तितम्। अत्र यथा तानि द्विरवद्यतीति

हवि से पंचावदान की सिद्धि हो जाती है। यहाँ उपस्तरण और अभिघार नामक दो अवदान एवं पशु के हृदय से तीन अवदान इस प्रकार पाँच अवदान हो जाने से वाक्यार्थ का बाध होने पर "तानि द्विरवद्यति" वैसा बताया गया है। इस कथन से हवि के तीन अवदान द्वित्वविधायक वाक्य से बाधित हो जाते हैं। "पञ्चावत्तैव वपा कार्या" यहाँ पर उपस्तरणात्मक दो अवदान मिलकर पाँच (अवदान) पूरे हो जाते हैं, ऐसा सिद्ध किया गया है। इससे "तानि द्विरवद्यति" इस वाक्य में आने वाले विरोध को दूर करने के लिए वपा पद की हविस्सामान्य में लक्षणा स्वीकार करना जैसे मीमांसाशास्त्र में प्रसिद्ध है, वैसे ही 'सर्वानन' वाक्य में अधिकरणबोधक पद न होने से इस वाक्य को व्यर्थ बनाने की अपेक्षा एक पद में लक्षणा वृत्ति

**पञ्चसंख्यापूर्तिस्तूपस्तरणादिवृद्ध्या कर्तव्येति तत्सार्थक्यं साधितमिति सर्वं सुस्थमित्यास्माकीनः पन्थाः ।**

**पूर्वाचार्यास्तु सर्वलिङ्गं स्थापयतीत्यत्र नापूर्वविधिः, पाणिमन्त्रं पवित्रमिति विशेषणस्य वक्ष्यमाणरीत्या पाण्यधिकरणकपूजाप्रतिपादकत्वसमर्थनेन तदन्यथानुपपत्त्या लिङ्गधारणप्राप्तौ त्रैकालिकाप्राप्त्यभावादित्यूचुः ।**

---

वाक्यस्य वैयर्थ्यवारणाय वपापदस्य हविस्सामान्ये लक्षणा स्वीक्रियते, तथा सर्वाननशिरोग्रीवेत्यादिवाक्यस्य वैयर्थ्यवारणाय सर्वाननशिरोग्रीवपदस्य सर्वाननाद्यधिकरणके लक्षणा स्वीकर्तव्येति तात्पर्यम् ।

पूर्वाचार्यास्त्विति । पाणिमन्त्रं पवित्रमिति पदद्वयं पाणौ मन्त्रः पूजनं यस्येति व्युत्पत्त्या पूयतेऽनेनेति व्युत्पत्त्या च पाण्यधिकरणकपूजाकर्मत्वमशुचिकाले धारणेऽपि पवित्रत्वं च लिङ्गस्य बोधयति । प्रतिदिनं तादृशपूजनं च लिङ्गधारणं विना नोपपद्यत इत्यन्यथानुपपत्त्याऽर्थापत्तिप्रमाणेन लिङ्गधारणस्य प्राप्ततया च स्थापयतीत्यस्याऽपूर्वविधित्वं न सम्भवतीति पूर्वाचार्या ऊचुरित्यर्थः । अत्रारुचिबीजं तु पार्थिवादिलिङ्गपूजनेनापि तन्निर्वाहादन्यथानुपपत्त्यभावः ।

से अधिकरण अर्थ को स्वीकार करके शिव इष्टलिंग के रूप से भक्तों के मुंह, शिर, कण्ठ आदि के आश्रय में रहते हैं, ऐसा कहना उत्तम पक्ष है । इस प्रकार श्वेताश्वतर उपनिषत् से भी लिंगधारण के सिद्ध होने से "सर्वलिङ्गं स्थापयति" यहाँ पर अपूर्व विधि के नियमानुसार लिंगधारण की सिद्धि नहीं हो पाती ।

किसी पूर्वाचार्य का कहना कि 'सर्वलिंग' मन्त्र में अपूर्व विधि नहीं है, "पाणिमन्त्रं पवित्रम्" यहाँ दो विशेषण आये हैं । 'पाणौ मन्त्रं पूजनं यस्य' इस व्युत्पत्ति से और 'पूयत इति पवित्रम्' इस व्युत्पत्ति से भी इष्टलिंग को हाथ में रखकर पूजा करनी चाहिये, यह अर्थ और पवित्र व अपवित्र काल में भी लिंग परिशुद्ध रहता है, यह अर्थ निकलता है । देह में उस प्रकार के लिंग को धारण किये बिना हाथ में पूजा कैसे हो सकती है ? अतः उस वाक्य में स्पष्ट रूप से लिंगधारण की बात न रहने पर भी अर्थापत्ति प्रमाण से यह सिद्ध हो जाती है । 'देवदत्त पुष्ट है, वह दिन में कभी भोजन नहीं करता' इस वाक्य में भोजन और पुष्टि इन दोनों का कार्यकारणभाव है । भोजन के बिना शरीर पुष्ट नहीं हो सकता । देवदत्त के शरीर के पुष्ट होने से दिन में भोजन न करने पर भी रात में भोजन जरूर करता

**ननु मास्त्वपूर्वविधिः, परन्तु—"याजनाध्यापनप्रतिग्रहै-र्ब्राह्मणो धनमर्जयेत्" इत्यादाविव नियमविधिरेव स्यादिति चेत्? तदपि गगनकुसुममालिकाधारणमनुकरोति मुक्ते विषये, "भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः" इति शातातपस्मृत्यादिविहितभस्मरुद्राक्षादिधारणस्यैव लिङ्ग-धारणस्यापि पक्षतः प्राप्तौ लिङ्गधारणमेव कर्तव्यं न भस्मा-**

---

एतावता प्रबन्धेन सर्वलिङ्गं स्थापयतीत्यत्रापूर्वविधित्वं निराकृत्य नियमविधित्वमाशङ्कते–नन्वित्यादिना। "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इत्यत्र धनार्जनस्य सुखदुःखाभावहेतुतया रागादेव प्राप्ततया याजनाध्यापनप्रतिग्रहैरेवेति नियमार्थो यथाऽर्जनविधिर्भवति, एवमेवायमपि लिङ्गधारणमेव कुर्यादिति नियमार्थोऽस्त्वित्याशयः। निराकरोति—तदपि गगनकुसुमेत्यादिना। अत्र प्रकरणे नियमपदं परिसंख्यापरम्। मुक्ते विषय इति। मुक्तपुरुषरूपविषय इत्यर्थः। अयं भावः—नियमकल्पे सर्वलिङ्गं स्थापयतीत्यस्य सर्वलिङ्गमेव स्थापयतीति वचनव्यक्तिः स्यात्। तथा च मुक्तपुरुषे भस्मरुद्राक्षादिधारणानां व्यावृत्तिपरोऽयं विधिः स्यात्, शरीराधि-करणकस्थापनस्य धारणरूपतायां पर्यवसानात्। तच्चानिष्टमेवापद्येत,

होगा, इस बात का जैसे निश्चय कर लिया जाता है, वैसे ही देह में लिंगधारण की कल्पना हो जाती है। इससे (प्रमाणान्तर से) प्राप्तत्व की सिद्धि हो ही जाती है, न कि अप्राप्त की सिद्धि। इसलिए पूर्वाचार्य सर्वलिंग मन्त्र में रहनेवाले "पाणिमन्त्रं पवित्रम्" इस वाक्य से ही अपूर्व विधि का निषेध करते हैं।

ऐसा कहने पर नियम विधि को स्वीकार कर लेते हैं, क्योंकि "ब्राह्मण पूजा करा कर, दान लेकर, पढ़ा कर धन का संग्रह करे, इसके अतिरिक्त किसी मार्ग से न करें" इस धर्मशास्त्र के नियम को जैसे मान लिया जाता है, वैसे हो "मोक्ष को चाहने वाला पुरुष इष्टलिंग के धारण करने मात्र से मोक्ष को प्राप्त हो जाता है और किसी मार्ग से नहीं" इस प्रकार से नियम विधि को अंगीकार करना चाहें, तो "जो भस्मधारण करता है, जो विभूति के बिस्तर पर लेटता है, जो रुद्राध्ययन करता है, वह सम्पूर्ण पापों से रहित होकर मोक्ष को प्राप्त कर लेता है" ऐसा शातातप स्मृति में बताया गया है। यहाँ लिंगधारण से मोक्ष प्राप्त करता है अथवा

**दीति नियमोऽङ्गीकरणीयः। सोऽप्यनिष्ट एव, "पिण्डता पिण्डविज्ञानं संसारगुणहेयता। दीक्षालिङ्गधृतिश्चैव विभूतेरपि धारणम्॥ रुद्राक्षधारणं चैव पञ्चाक्षरजपस्तथा। भक्तिमार्गक्रिया चैव गुरोर्लिङ्गस्य चार्चनम्॥ योगिनश्च तथा ह्येषां प्रसादस्वीकृतिस्तथा। एतानि शिवभक्तस्य कर्तव्यानि प्रत्यत्नतः॥" (५।२६-२९) इति सिद्धान्तशिखामणौ सर्वेषामप्यावश्यकत्वोक्तेः।**

---

विभूतिरुद्राक्षादिधारणस्यात्यन्तावश्यकत्वात्। तदेव दर्शयति—पिण्डता पिण्डविज्ञानमित्यादिना। पिण्डतापदेन पापाभाव उच्यते। पिण्डपदेन तद्वान् शुद्धात्मा उच्यते। सांसारिकपदार्थस्य पुत्रकलत्रादेर्हेयत्वस्य त्याज्यत्वस्य ज्ञानम्। दीक्षायाः, लिङ्गस्य, विभूतेः, रुद्राक्षाणां धारणम्। पञ्चाक्षरजपः, भक्तिमार्गक्रिया श्रवणकीर्तनाऽऽलयपरिमार्जनादिक्रिया, गुरोर्लिङ्गस्य योगिनां चार्चनं पूजनम्, एषामेव प्रसादस्वीकारश्चैतानि शिवभक्तस्यावश्यकर्तव्यानीत्यर्थः। अत्र मुक्त इत्यधिकार्युपलक्षणम्।

भस्मरुद्राक्षधारण से, इस प्रकार के दो विकल्प प्राप्त होते हैं। नियम विधि के अनुसार यहाँ किसी एक का निषेध बताना ही होगा। लिंगधारण ही मुक्ति का कारण है, ऐसा कहने पर भस्मरुद्राक्षधारण मोक्ष का कारण नहीं है, ऐसा बताना होगा। इष्टलिंगधारक वीरशैवों के लिए लिंगधारण और भस्मरुद्राक्षधारण दोनों की आवश्यकता है। इन दोनों में से किसी का भी निषेध करें, तो वह अनिष्टदायक ही होगा।

सिद्धान्तशिखामणि में पिण्डस्थल, (शुद्ध जीव) पिण्डज्ञानस्थल (शरीर और जीव का विवेक), संसारगुणहेयस्थल, गुणकारुण्यस्थल (दीक्षा), लिंगधारणस्थल, भस्मधारणस्थल, रुद्राक्षधारणस्थल, पंचाक्षरजपस्थल, भक्तमार्गक्रियास्थल, उभयस्थल, त्रिविधसम्पत्तिस्थल, 'प्रसादस्वीकारस्थल, सोपाधिदानस्थल, निरुपाधिदानस्थल, सहजदानस्थल—इस प्रकार के पन्द्रह स्थल वर्णित हैं। इन सबका शिवभक्तों के द्वारा प्रयत्नपूर्वक संग्रह करना है। इससे यह स्पष्ट हो जाता है कि लिंगधारण की तरह भस्मरुद्राक्षधारण भी शिवभक्त के लिए आवश्यक है। इस तरह से "सर्वलिङ्गं स्थापयति" यह वाक्य नियमविधि में भी नहीं आ सकता।

तब तो तीसरी परिसंख्याविधि ही यहाँ स्वीकारनी पड़ेगी, किन्तु यह भी संभव नहीं है, क्योंकि चयनप्रकरण में यज्ञ की वेदि को तैयार करने के लिए गाड़ी के

**ननु तर्हि लिङ्गधारणाकर्तव्यतानिषेधपूर्वककर्तव्यताफलकपरिसंख्यैव भूयादिति चेन्मैवम्, तत्कर्तव्यत्वाऽकर्तव्यतयोरेकाऽप्रसक्त्या समुच्चयासंभवे परिसंख्यायोगादिति पूर्वपक्षः ।।**

---

ननु तर्हीति । अस्मिन् प्रकरणे नियमपरिसंख्यापदयोः प्रयोगौ वैपरीत्येनानवधानतः कृतौ, इतरव्यावर्तकाकारोपगमे पञ्चैव पञ्चनखा भक्ष्या इत्येतत्सदृशे नियमपदस्य लिङ्गधारणाकर्तव्यतानिषेधपूर्वककर्तव्यताफलकाकारस्वीकारे च "ऋतौ भार्यामुपेयादेव" (गौ० स्मृ० ५।१) इत्येतत्सादृश्यप्राप्तौ परिसंख्यापदस्य प्रयोगात् । वस्तुतः पूर्वत्रैव परिसंख्यापदस्य प्रयोग उचितः, समुच्चयासंभवे परिसंख्यायोगादिति । यद्यपि परिसंख्यायां नियमे वा कुत्रापि समुच्चयप्राप्तेरपेक्षा नास्ति, रागतः प्राप्तपञ्चपञ्चनखभक्षणविधानेन कदाचित् प्राप्ततदितरपञ्चनखभक्षणस्य, एवं तुषनिवृत्तिहेतुतया स्वयं प्राप्तावघातविधानेन कदाचित् प्राप्तस्योपायान्तरस्य नखविदलनादेश्च व्यावृत्तेर्बोधनात्, तथापि—"एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः" (सि०शि० ५।२९) इत्यवश्यकर्तव्यतोक्तावकर्तव्यतायाः स्वत एव निषेधाद् नियमादेरपेक्षा नास्तीति भावः ।

एक तरफ घोड़े को और दूसरी तरफ गदहे को जोत कर ईंटा लाने के लिए जंगल में जाने पर "इमामगृभ्णन् रशनाम्" इस मन्त्र में जैसे बताया है, वैसे रस्सी को पकड़ना है । सामान्य रूप से यहाँ घोड़े की रस्सी और गदहे की रस्सी दोनों के एक साथ रहने पर भी "इमामगृभ्णन्" इस मन्त्र का अनुसरण करते हुए उन दोनों में से घोड़े की रस्सी को खींचते हुए गदहे की रस्सी को न खींच कर और मन्त्र का भी उच्चारण न करते हुए रहना है । यही परिसंख्या विधि का उदाहरण है । "पञ्च पञ्चनखा भक्ष्याः" यह भी इसी का उदाहरण है । यहाँ पर लिंगधारण और भस्मरुद्राक्षधारण के कर्तृत्व और अकर्तृत्व का एक ही बार समुच्चय न होने से परिसंख्याविधि भी नहीं बता सकते । इस प्रकार लिंगधारण की विधि आपकी दृष्टि में नित्य होने पर भी पूर्वमीमांसा शास्त्र में बताए हुई तीन विधियों में से किसी भी विधि के अन्तर्गत नहीं आती, अतः अवैदिक है, ऐसा हमारा मानना है ।

**समाधान**—इन तीनों ही विधियों से लिंगधारण सिद्ध होता है । प्रथम विधि में एक वाक्य से विधान किया हुआ अर्थ दूसरे वाक्य से विहित न होने पर ही अपूर्व विधि के अन्तर्गत आता है । यहाँ ऐसा नहीं है, ऐसा मानकर किया हुआ पूर्वपक्ष

**अत्रोच्यते—सर्वलिङ्गं स्थापयतीत्यत्रापूर्वविधिरेव। न च धारणस्य सर्वाननशिरोग्रीव इति वाक्यविहितत्वेन न त्रैकालिकाप्राप्तिरिति वाच्यम्, अस्य स्वप्रतिपाद्याधिकरण-प्रतियोगिलिङ्गधारणविधायकसर्वलिङ्गवाक्यसापेक्षत्वेन उप-जीवकेनोपजीव्येऽन्यथासिद्ध्ययोगात्।**

---

न त्रैकालिकाप्राप्तिरिति। तथा च "विधिरत्यन्तमप्राप्तौ" इति लक्षण-लक्षितं त्रैकालिकाप्राप्तप्रापकत्वरूपं विधित्वं न सम्भवतीति भावः।

स्वप्रतिपाद्याधिकरणेति। स्वं सर्वाननेति वाक्यम्, तत्प्रतिपाद्यान्य-धिकरणान्याननशिरोग्रीवरूपाणि तेषां प्रतियोगिसंबन्धितन्निष्ठाधिकरणता-निरूपकं यल्लिङ्गधारणम्, तद्विधायकं यत् सर्वलिङ्गं स्थापयतीति वाक्यम्, तत्सापेक्षत्वेन तद्बोध्याधेयज्ञाननिवर्त्याकाङ्क्षावदर्थबोधकत्वेन। अयं भावः—आधेयबोधनं विना केवलाधिकरणताबोधकवाक्यं स्वजन्यत्वेन तात्पर्यविषयी-

यहाँ टिक नहीं सकता, क्योंकि "सर्वाननशिरोग्रीवः" यह वाक्य इष्टलिंग को धारण करने योग्य कण्ठ, शिर आदि (आधेय) स्थानों को दिखाता है। "सर्वलिङ्गं स्थापयति" यह वाक्य शरीर में सामान्य रूप से इष्टलिंग का विधान करने के बाद उस लिंग को धारण करने योग्य विशेष स्थानों को न बतावे तो वह वाक्य पूर्ण नहीं होता। इसलिए "सर्वलिङ्गं स्थापयति" इस वाक्य के द्वारा सामान्य रूप से लिंगधारण का विधान करने के बाद "सर्वाननशिरोग्रीवः" यह मन्त्र लिंगधारण के लिए विशेष स्थान बताता है, ऐसा हम कहते हैं। इससे 'सर्वलिंग' वाक्य को उपजीव्य (प्रधान) वाक्य मानकर 'सर्वानन' वाक्य को उपजीवक (पोषक) वाक्य मानने पर ये दोनों वाक्य मिलकर एक ही वाक्य हो जाते हैं और इस तरह से यहाँ अपूर्वविधि मानने में कोई बाधा नहीं है। अग्नि में तपाई गई लिंग, शूल, डमरु, शंख, चक्र आदि मुद्राओं का निषेध कर वेदोक्त शिवलिंग, भस्म, रुद्राक्ष आदि के धारण का विधान करने से नियमविधि और परिसंख्याविधि से भी लिंगधारण की सिद्धि हो जाती है।

**शङ्का**—'सर्वलिङ्गम्' यह वाक्य तैत्तिरीय वाक्य है और 'सर्वानन' यह वाक्य श्वेताश्वतरोपनिषत् का है। इस प्रकार भिन्न भिन्न श्रुतिवाक्यों में उपजीव्य और उपजीवक भाव से एकवाक्यता को स्वीकार करने की अपेक्षा उसी श्वेताश्वतर के 'सर्वानन' वाक्य के समीप में स्थित लिंगधारण का विधान करने वाले "तस्याभिध्यानाद् योजनात्" इस वाक्य की और 'सर्वानन' इस वाक्य की एक-वाक्यता मान लेना उत्तम होगा।

**न चास्य स्वसमानाधिकरण-तस्याभिध्यानाद्योजनात्तत्त्वभावादिति वाक्यविहितधारणाधिकरणनिरूपकत्वेन न सर्वलिङ्गवाक्यसापेक्षतेति वाच्यम्, वैषम्यात्। अत्रानितरसाधारणलिङ्गश्रुतिसत्त्वेन स्थापयतीति धारणविधायकपदसत्त्वेन च विलम्बोपस्थितिकतद्वाक्यापेक्षया बलवत्त्वात्।**

---

भूतबोधाय पर्याप्तं न भवतीत्याधेयबोधकं वाक्यान्तरमपेक्षत इति। प्रकृते सर्वाननेति वाक्यस्य सर्वलिङ्गं स्थापयतीत्यस्य च परस्परापेक्षितार्थबोधकत्वेनैकवाक्यतापन्नतया मिलित्वैवोद्देश्योभूतबोधपर्याप्ततया च नैकेनापरस्य प्राप्तप्रापकत्वं वा वैयर्थ्यं वा नियमत्वं वा शङ्कितुं शक्यत इति भावः।

न चास्येति। स्वसमानाधिकरणं यत् तस्याभिध्यानाद् योजनादिति वाक्यम्, तद्विहितं यद्धारणं तदधिकरणनिरूपकत्वेन। अत्र निरूपकत्वेनेत्यस्य बोधकत्वेनेत्यर्थः, स्वसमानाधिकरणेत्यस्य च स्वप्रकरणस्थेत्यर्थः। इदमेवैतच्छङ्कायां बीजम्। स्वसन्निहितेन स्वोत्थापिताकाङ्क्षापूरणसम्भवे विप्रकृष्टेन तत्पूरणस्यात्यन्तानौचित्यादिति च भावः। वैषम्यादिति। तस्याभिध्यानादिति वाक्यात् सर्वलिङ्गवाक्यस्य वैलक्षण्यादित्यर्थः। वैलक्षण्यमेव दर्शयति— अनितरसाधारणेति। लिङ्गपदं शिवादितरदेवे न प्रयुज्यते, एवं स्थापय-

**समाधान**—दूर-दूर रहनेवाले दो वाक्यों में उपजीव्य और उपजीवकभाव को स्वीकार करने की अपेक्षा समीपवर्ती वाक्यों में उपजीव्य और उपजीवक भाव मान लेना उत्तम है। ऐसा स्वीकार करने पर भी यहाँ वैसा उपजीव्य और उपजीवकभाव इन दोनों में नहीं बता सकते, क्योंकि "तस्याभिध्यानाद् योजनात् तत्त्वभावात्" यहाँ यद्यपि इष्टलिंग, प्राणलिंग और भावलिंग इन तीनों लिंगों के धारण की बात कही गई है, तो भी 'तस्य' इस पद के पीछे के वाक्यों को लेकर विचार करने पर पूर्णतया शिवलिंग है, ऐसा अर्थ करना होगा। केवल वाच्यार्थ से स्पष्टतया लिंगधारणपरक है, ऐसा नहीं बता सकते। इसलिए "सर्वलिङ्गं स्थापयति" इस श्रुतिवाक्य के दूसरी श्रुति का वाक्य होने पर भी इसमें शिव के अलावा अन्य किसी देवता के निमित्त अप्रयुक्त, केवल शिव में ही नियमित रूप से योग और रूढ़ होकर रहनेवाला 'लिंग' नामक पद होने से तथा धारण के विधायक 'स्थापयति' पद के होने से हाथ में रखकर पूजा करनी चाहिए, ऐसे अर्थ के सूचक 'पाणिमन्त्रम्' पद के होने से "सर्वाननशिरोग्रीवः" इस दूरवर्ती वाक्य से उपजीव्य और उपजीवकभाव को बताना ही ठीक है।

**न च लोकवेदाधिकरणेन व्याकरणादिना गृहीतशक्तिक-लौकिकशब्दानामेव वैदिकत्वनिर्णयेन पशुना यजेतेत्यादौ**

---

तीति पदं च स्थापनादन्यत्र न प्रयुज्यते। एतत्पदद्वयस्यानितरसाधारणतया विशेषार्थबोधकस्याधेयाकाङ्क्षाशमनार्हस्योपलम्भे तस्याभिध्यानादिति सामान्यवाक्येन विलम्बेनार्थोपस्थापकेन तदपेक्षाशमनमनुचितमिति भावः।

लोकवेदाधिकरणेनेति। पूर्वमीमांसायां प्रथमाध्यायस्य तृतीयपादे—"प्रयोगचोदनाभावादर्थैकत्वमविभागात्" (१।३।३०) इति त्रिंशे सूत्रे लौकिक-वैदिकशब्दानामेकार्थकत्वं सिद्धान्तितम्। तत्र देवा इत्यत्र देवासः, भवतीत्यत्र भवाति, कर्णैरित्यत्र कर्णेभिरिति लौकिकप्रयोगापेक्षया वेदे विलक्षण-

---

**शङ्का**—लोकवेदाधिकरण न्याय से "सर्वलिङ्गं स्थापयति" इस वाक्य का "सर्वाननशिरोग्रीवः" यह वाक्य सापेक्ष न होने पर भी "सर्वलिङ्गं स्थापयति" यह वाक्य विधिवाक्य ही है, क्योंकि मीमांसाशास्त्र के प्रथमाध्याय के तीसरे पाद में वैदिक और लौकिक शब्दों का एकार्थत्व निर्णीत है। यहाँ पूर्वपक्षी का कहना है कि लौकिक शब्द और वैदिक शब्दों में बहुत ही अन्तर दीखता है। जैसे कि लोकव्यवहार में 'देवाः' और वेद में 'देवासः' रूप बनता है। लोक में 'भवति' और वेद में 'भवाति' क्रिया प्रयुक्त होती है। लोक में 'कर्णैः' और वेद में 'कर्णेभिः' प्रयोग होता है। इस प्रकार लौकिक प्रयोगों की अपेक्षा वैदिक प्रयोगों की विलक्षणता के कारण लौकिक शब्दों का अर्थ एक प्रकार का है और वैदिक शब्दों का अर्थ दूसरे प्रकार का। यदि हम इस पूर्वपक्ष को मान लें, तो लौकिक वैदिक शब्दों के भिन्न भिन्न अर्थ करने पर इन शब्दों की इसी अर्थ में शक्ति है, ऐसा निर्णय करने वाले व्याकरण आदि शास्त्रों का कोई प्रयोजन ही नहीं रह जायगा। जब शब्द की शक्ति ही स्वीकार नहीं है, तब अर्थ का बोध न हो पाने के कारण सभी वाक्य व्यर्थ हो जायेंगे। इसलिए शक्तिग्राहक व्याकरण आदि के आधार पर लौकिक शब्द और वैदिक शब्दों का एक ही अर्थ स्वीकार किया जाता है, न कि भिन्न भिन्न अर्थ। जैसा कि—"पशुना यजेत" इस स्थान पर 'पशुना' यहाँ तृतीयानिष्ठ शक्ति और 'यजेत' यहाँ यजिनिष्ठ शक्ति और लिंगनिष्ठ शक्ति व्याकरण आदि से ही जानी जाती है। इस तरह से "पशुना यजेत" इस वैदिक वाक्य की व्याकरण आदि की सापेक्षता होने पर भी जैसे विधि का लोप नहीं होता,

**पश्वादिशब्दानां शक्तिग्रहार्थं व्याकरणादिसापेक्षत्वेऽपि यथा विधायकत्वं स्वीकृतम्, तद्वदिहापि किं न स्यादिति वाच्यम्,**

प्रयोगदर्शनेन लोकापेक्षया वैदिकशब्दानामन्यार्थत्वं भविष्यतीति पूर्वपक्षीकृत्य सिद्धान्तबोधनायेदं सूत्रं प्रणीतम्—प्रयोगेति। अयमर्थः—प्रयोगस्य कर्मानुष्ठानस्य चोदनाया विधायकवाक्यस्याभावादर्थाबोधकत्वप्रसङ्गादर्थैकत्वं लौकिकवैदिकशब्दयोरेकार्थत्वम्। हेत्वन्तरमुच्यते—अविभागात्। एकानुपूर्वीकशब्दानां मीमांसकमतेऽभेदात्। शब्दाभेदादप्यर्थाभेद उचित इति तात्पर्यम्। अयं भावः—लोके व्यवहारादिना गृहीतशक्तिकानां पदानां वेदेऽपि सत्त्वोपगमेऽर्थबोधकत्वमुपपद्यते। वैदिकशब्दानां लौकिकशब्देभ्यो भिन्नत्वभिन्नार्थकत्वोपगमे तु शक्तिग्रहाभावादर्थबोध एव तेभ्यो न स्यादिति व्यर्थान्येव वाक्यानि भवेयुरित्यवश्यमेकार्थकत्वं लौकिकवैदिकशब्दानां मन्तव्यम्। शक्तिग्रहार्थं व्याकरणादिसापेक्षत्वेऽपीति। पशुनेत्यत्र तृतीयानिष्ठा, यजेतेत्यत्र यजनिष्ठा लिङ्निष्ठा च शक्तिः कर्तृकरणयोस्तृतीया, विधिनिमन्त्रणामन्त्रेणत्यादिशास्त्रैर्बोध्यत इति तत्सापेक्षत्वमत्र बोध्यम्। तद्वदिहापि किं न स्यादिति। यथा पशुना यजेतेति वाक्यस्य व्याकरणसापेक्षत्वेऽपि विधित्वं न हीयते, एवं सर्वाननशिरोग्रीव इति वाक्यस्य सर्वलिङ्गैः स्थापयतीति वाक्यसापेक्षत्वेऽपि विधित्वं कस्मान्न भविष्यतीत्यर्थः। पशुना यजेतेति वाक्यव्याकरण-

वैसे ही "सर्वाननशिरोग्रीवः" इस वाक्य के "सर्वलिङ्गं स्थापयति" इस वाक्य का सापेक्ष होने पर भी विधिवाक्यता क्यों नहीं स्वीकार की जा सकती ? ऐसा आक्षेप हो जाता है। यह आक्षेप विचार की दृष्टि से उचित नहीं है, क्योंकि व्याकरण आदि शास्त्र केवल शक्तिग्रह में ही उपयुक्त होते हैं। इसलिए "पशुना यजेत" इस प्रकृत वाक्यार्थ-बोध के लिए उपयुक्त वृत्तिज्ञानाधीनपदजन्योपस्थिति आदि से विशिष्ट कारण सामग्री के रहने से तात्पर्यविषयीभूत ज्ञान हो जाता है। अतः वहाँ किसी अन्य वाक्य की अपेक्षा नहीं रहती। इस "सर्वाननशिरोग्रीवः" वाक्य से तो लिंगधारण के बोधक पदजन्योपस्थिति से विशिष्ट, कारणसमुदाय के होने पर भी लिंगधारण करने के स्थान (आधेय) को बताने के निमित्त इससे भिन्न "सर्वानन" वाक्य की अपेक्षा है। इस तरह से पशुविधि की व्याकरण आदि सापेक्षता के होने पर भी उसकी व्याकरण आदि के साथ एकवाक्यता नहीं रहती। "सर्वाननशिरोग्रीवः" के प्रसंग में तो 'सर्वलिंग' वाक्य और 'सर्वानन' वाक्य की एकवाक्यता अवश्य माननी पड़ेगी। इसमें लिंगोपासनानुष्ठान की उपयोगिता

**व्याकरणादीनां शक्तिग्रहमात्रोपयोगित्वेन तथात्वेऽप्यत्र याव-द्वाक्यार्थविचारं विना लिङ्गधारणाप्राप्तेस्तत्काल एव सर्व-लिङ्गवाक्यस्य विधायकत्वासिद्धेः। किञ्चात्र—"सर्वव्यापी च**

---

सूत्रयोरेकवाक्यत्वाभाववत् सर्वाननसर्वलिङ्गवाक्ययोरेकवाक्यत्वाभावात् स्वैकवाक्यतानापन्नवाक्यप्रापितमात्रप्रापकत्वेनापूर्वविधित्वं न संभवतीति तात्पर्य्यम्।

शक्तिग्रहमात्रोपयोगित्वेनेति। वाक्यार्थविचारं विनेति। अयं भावः—पशुना यजेतेत्यत्र प्रकृतवाक्यार्थबोधोपयोगिवृत्तिज्ञानाधीनपदजन्योपस्थित्यादि-घटितकारणकलापसद्भावे स्वजन्यत्वेन तात्पर्यविषयीभूतबोधे जननीये वाक्यान्तरस्य कस्याप्यपेक्षा नास्ति। सर्वाननशिरोग्रीव इत्यनेन तु स्वघटक-पदजन्योपस्थित्यादिघटितकारणसमुदायसत्त्वेऽप्याधेयांशबोधाय सर्वलिङ्ग-वाक्यस्यापेक्षाऽस्त्येवेति। ततश्च व्याकरणेन पशुविधेः पदैकवाक्यता नास्ति। इह त्वनुष्ठानोपयोगिबोधे उभयोरेकवाक्यताया आवश्यकत्वेन स्वैकवाक्यता-नापन्नाप्रापितप्रापकत्वेनापूर्वविधित्वे न किञ्चिद् बाधकमित्याह—विधाय-कत्वासिद्धेरिति। सर्वाननेत्येकवाक्यतानापन्नस्य सर्वलिङ्गवाक्यस्येत्यर्थः।

होने से एकवाक्यतानापन्न से प्राप्त प्रापकत्व रूप अपूर्व विधि है, ऐसा कहने में कोई बाधा नहीं हो सकती। इस प्रकार इन दोनों वाक्यों की एकवाक्यता स्वीकार करने में 'सर्वानन' वाक्य विधिविषयक ही नहीं हो सकता है। इसलिए 'सर्वानन' और 'सर्वलिंग' इन दोनों वाक्यों की अलग अलग विधिविषयकता के होने पर भी ये दोनों मिलकर एकवाक्यता को प्राप्त होकर विधिविषयक होते हैं, ऐसा मानना उचित होगा।

इसके अतिरिक्त इसी मन्त्र के आगे "सर्वव्यापी च भगवान्" इस प्रकार से लिंग की स्तुति करने से इन दोनों वाक्यों की एकवाक्यता के आधार पर उस वाक्य के एक-एक भाग को लेकर दूसरे भाग में अन्यथासिद्धि नामक दोष को बताने का कोई अवकाश नहीं है। लेकिन "सर्वलिङ्गं स्थापयति" इस वाक्य के आगे "पाणिमन्त्रं पवित्रम्" जैसा वाक्य है। "मन्त्रोऽस्यास्तीति मन्त्रम्" इस प्रकार मत्वर्थीय अच् प्रत्यय करने पर मन्त्र शब्द का लिंग अर्थ होता है। "पाणौ मन्त्रं पाणिमन्त्रम्" इस व्युत्पत्ति के आधार पर हाथ में रखकर पूजा जाने वाला लिंग, ऐसा अर्थ हो जाता है। इस वाक्य में 'पाणिमन्त्रं' यह पद "सर्व-लिङ्गं स्थापयति" इस वाक्य का विशेषण हो जाता है। इस प्रकार के विशेषण से

**भगवान्" (श्वे. उ. ३।११) इति लिङ्गस्तुतिसमर्पणेनार्थवादत्व-निश्चये सत्यनेन तदन्यथासिद्धचयोगाच्च ।**

**यच्चोक्तं पाणिमन्त्रमिति विशेषणप्रतिपाद्यार्थान्यथानुपपत्त्या तस्य प्राप्तत्वेन विध्यसम्भव इति, तन्न, अस्यापि**

---

पृथग्भूतस्य विधायकत्वासिद्धौ मिलितस्यैव विधायकत्वमित्यर्थात् सिद्धम् । ततश्चोभयोरेकवाक्यघटकत्वान्नैकभागेनापरभागस्यान्यथासिद्धिसम्भव इत्याशयः ।

पाणिमन्त्रमिति । मा भूत् सर्वाननेत्यनेन प्राप्तिः, पाणिमन्त्रमित्यनेन तु प्राप्तिरस्त्येवेति पुनरपि विधित्वानुपपत्तिस्तदवस्थेत्याशयः । कथं पाणिमन्त्रमित्यस्य विधेयताप्रयोजकलिङाद्यघटितस्य विधायकत्वमित्याशङ्कायामाह—अन्यथानुपपत्त्येति । पाणिमन्त्रमित्यत्र मन्त्रपदेन लिङ्गमुच्यते, मन्त्रोऽस्यास्तीति मत्वर्थीयाच्प्रत्ययस्वीकारात्, पाणौ मन्त्रमिति व्युत्पत्त्या च पाणिस्थं लिङ्गं पाणिमन्त्रपदेनोक्तं भवति । पाणिस्थत्वं च लिङ्गस्य धारणं विना

हाथ में रहनेवाला लिंग, ऐसा अर्थ सिद्ध हो जाता है । देह में लिंग को धारण किये बिना लिंग का पाणि(हस्त)स्थत्व सम्भव नहीं है । इसलिए 'अर्थापत्ति' प्रमाण से लिंगधारण की कल्पना कर लेते हैं, तो "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" इस मन्त्र से ही लिंगधारण की विधिरूपता के सिद्ध हो जाने पर और "सर्वाननशिरोग्रीवः" इस वाक्य की भिन्नप्रमाणता के सिद्ध हो जाने से प्रमाणान्तरों से भी लिंगधारण की प्राप्ति हो जाने से अप्राप्तत्वरूप विधि का लक्षण ही यहाँ नहीं घटता । अतः फिर जैसा का तैसा आक्षेप बना रह जाता है ।

**समाधान**—'पाणिमन्त्रम्' यह विशेषण 'सर्वलिङ्गं' इस वाक्य में सामान्य रूप से धारणविधान की प्रक्रिया में अधिकरण (आश्रय) को दिखलाता है, न कि कण्ठ आदि स्थानों को । जब लिंग का सान्निध्य ही नहीं रह पाता, तो पाण्याश्रयत्व की सम्भावना कैसे हो सकती है । इसलिए 'पाणिमन्त्रम्' यह वाक्य साधारण लिंग के सान्निध्य को बताता है, न कि विशेष रूप से शिर, कण्ठ आदि स्थानों को । इसलिए "सर्वाननशिरोग्रीवः" यह वाक्य ही भक्तों के शिर, हाथ आदि विशेष स्थानों को बताने वाला है । अतः यह उपजीवक वाक्य है और 'सर्वलिङ्ग' वाक्य उपजीव्य है । ऐसा मान लेने पर अपूर्वविधि का बाध नहीं होता ।

**सर्वलिङ्गवाक्येन सामान्यतो धारणविधावधिकरणविशेषसमर्पकत्वेन तदुपजीवकेन तदन्यथासिद्ध्ययोगादिति। पाणिमन्त्रमित्यस्य धार्यत्वेन मन्त्रोऽस्यास्तीति मन्त्रमिति मत्वर्थीयाच्प्रत्यये कृते मन्त्रं लिङ्गम्, पाणौ मन्त्रं पाणिमन्त्रमित्यर्थः। "तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः" इति लिङ्गपुराणोक्तेः।**

---

नोपपद्यत इत्यर्थापत्तिप्रमाणेन धारणं कल्प्यत इति प्रश्नकर्तुराशयः। अधिकरणविशेषसमर्पकत्वेनेति। तथा च सर्वाननवाक्यवत् पाणिमन्त्रमिति विशेषणमपि पाणिरूपविशेषाधिकरणसमर्पकत्वेन सर्वलिङ्गवाक्यस्याङ्गमेव जातमिति न तेन सर्वलिङ्गवाक्यस्य वैयर्थ्यमिति भावः। तदुपजीवकेनेति। तस्य सर्वलिङ्गवाक्यस्य उपजीवकेन अङ्गभूतेन पाणिमन्त्रमिति विशेषणेन तस्य सर्वलिङ्गवाक्यस्य अन्यथासिद्धेर्वैयर्थ्यस्य अयोगादसम्भवादित्यर्थः। यद्यपि सामान्येन विशेषांश एवोपजीव्यत इति पाणिमन्त्रमिति विशेषणस्योपजीवकत्वकथनमनुचितम्, तथापि फलवत्सन्निधावफलमङ्गमिति न्यायेन पाणिमन्त्रमिति विशेषणस्याङ्गत्वे सिद्धे अङ्गेन च स्वसार्थक्यायाऽङ्गिन उपजीवनादियमुपजीवकत्वोक्तिर्द्रष्टव्या। प्रष्टुः सन्तोषाय पूर्वपक्षमभ्युपगम्येदं समाधानं बोध्यम्। वस्तुतस्तु लिङ्गनिष्ठपाणिस्थत्वस्य लिङ्गसान्निध्यं

गुरु शिष्य के अंग को शिवदीक्षा संस्कार से शुद्ध करके "निधनपतये नमः। सर्वलिङ्गं स्थापयति। पाणिमन्त्रं पवित्रम्" इस मन्त्र का उच्चारण करते हुए शिवलिंग को हाथ, कण्ठ और शिर आदि किसी अंग (स्थान) पर धारण करना चाहिए, ऐसा साफ साफ बता देता है। इस प्रकार 'सर्वलिंग' वाक्य में अपूर्वविधि को बतला कर अब "पाणिमन्त्रं पवित्रम्" इस वाक्य में नियम विधि को सिद्ध करते हैं। पूर्वमीमांसा शास्त्र में "अग्निहोत्र नामक याग से स्वर्ग की भावना करे" इस वाक्य का जो स्वर्ग को चाहता है, वह अग्निहोत्र नामक याग को करे, यह अर्थ सिद्ध होने पर भी इस याग को कहाँ करना है ? इस प्रकार एक अधिकरण विशेष की अपेक्षा रहती है। इसलिए 'आहवनीय' अग्नि में उस याग को करना है अथवा अन्य किसी अधिकरण में करना है, ऐसा विकल्प उत्पन्न हो जाता है। "आहवनीये जुहोति" इस विशेष वाक्य से आहवनीय नामक अग्नि में ही स्वर्ग को चाहने वाले को अग्निहोत्र करना है, न कि अन्य अग्नि में, इस प्रकार जैसे नियम को स्वीकार किया गया है, वैसे ही "शिव भक्त शिवलिंग को धारण करें" इस वाक्य का 'स्थापयति' पद सामान्य रूप से लिंगधारण का विधान करता है।

**अत्र च "अग्निहोत्रं जुहोति" (तै. सं. १।५।९।१) इति वाक्यविहितनिरधिकरणाग्निहोत्रनामकहोमस्याधिकरणसमर्प-**

---

विनाऽनुपपन्नत्वेन सान्निध्यस्य च गृहभृत्यादिहस्तस्थितेनापि लिङ्गेनो-पपन्नत्वेन तत्साधारणसान्निध्यमात्रस्य कल्पयितुं शक्यत्वेऽपि धारणस्य विशेषरूपेण कल्पयितुमशक्यत्वात् पूर्वपक्ष एवायं नोत्तिष्ठतीति बोध्यम्। अच्प्रत्ययेन मन्त्रोऽस्यास्तीत्येतावन्मात्रं लभ्यते। धार्यत्वेनेति विशेषांशः कुतो लभ्यत इत्यत्र लिङ्गपुराणं प्रमाणमुपन्यस्यति—"तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः" इति।

सर्वलिङ्गं स्थापयतीति वाक्यस्यापूर्वविधित्वं संस्थाप्य पाणिमन्त्रं पवित्रमित्यंशस्य नियमविधित्वं स्थापयति—अत्र चेत्यादिना। अत्र च पाणिमन्त्रमित्यंश इत्यर्थः। "अग्निहोत्रं जुहोति" (तै० सं० १।५।९।१)

लेकिन किस स्थान पर धारण करे, इसका स्पष्टीकरण न होने से विशेष अधिकरण की अपेक्षा बनी रहती है। लिंगपूजा के लिए दारु (लकड़ी) आदि का पीठ जैसे अधिकरण होता है, वैसे ही हाथ भी एक अधिकरण हो सकता है। इस स्थिति में उस शिवलिंग को दारु आदि के पीठ के ऊपर रखकर पूजा करनी है अथवा हाथ में रखकर, इस प्रकार के दो विकल्प उत्पन्न होते हैं। 'सर्वलिङ्गम्' इस वाक्य के समीप में "पाणिमन्त्रं पवित्रम्" इस वाक्य के होने से शिवलिंग को पाणि (हाथ) नामक अधिकरण विशेष में ही रखकर पूजा करनी है, न कि किसी अन्य अधिकरण में, इस प्रकार के निर्णय से नियमविधि से भी लिंगधारण की सिद्धि हो जाती है।

**शंका**—"अग्निहोत्रं जुहोति" इस वाक्य के समीप में "आहवनीये जुहोति" इस प्रकार का सप्तम्यन्त पद होने से उस अग्निहोत्र याग की अधिकरणता का निश्चय हो जाता है, 'पाणिमन्त्रं' इस वाक्य में तो सप्तम्यन्त पद है नहीं, तब करपीठ में पूजा करनी है, ऐसा नियम कैसे बनाया जा सकता है?

**समाधान**—'पाणिमन्त्रं' इस स्थान पर—"मन्त्रोऽस्यास्तीति मन्त्रं लिङ्गम्, पाणौ मन्त्रं पाणिमन्त्रम्" इस प्रकार विग्रह करने से समासविधि से सप्तमी विभक्ति का लोप हो गया है। अर्थात् पाणि (हाथ) में रखकर पूजा करनी चाहिए, इस प्रकार के अधिकरण पद के स्पष्टतया दीखने के कारण उस प्रकार के आक्षेप का अवसर ही नहीं मिलता और 'पाणिमन्त्रं' इस पद से आगे पवित्र शब्द होने से पवित्र काल व अपवित्र काल हो तो भी शिवलिंग को धारण करे, ऐसा कहने से निरन्तर पवित्रता की भी सिद्धि हो जाती है।

काह्वनीये जुहोतीति वाक्यस्थल इव सर्वलिङ्गवाक्यविहितलिङ्ग पीठाद्यधिकरणस्येव पाण्यादेः पक्षतः प्राप्तौ पाण्यादिकमेवेति नियमो विधीयत इति । न चाह्वनीयवाक्येऽधिकरणताबोधक-सप्तमीविभक्तिसत्त्वेन तथात्वेऽप्यत्र तदभावात् कथमधिकरण-विधित्वमिति वाच्यम्, लुप्तसप्तमीस्मरणेनात्राप्यधिकरणत्व-प्रतीतेः । पवित्रशब्देन "यज्ञोपवीतं परमं पवित्रम्" इत्यत्रेवा-शुचिकालधारणप्रयुक्ताऽपावित्र्यनिरसनद्वारा पावित्र्यं विधीयते।

---

इत्यत्राग्निहोत्रशब्दस्य नामधेयतयाऽग्निहोत्राभिन्नहोमेन स्वर्गं भावयेदित्यर्थ-कत्वेन निरधिकरणकहोमविधावधिकरणविशेषापेक्षायां सामान्यरूपे-णाह्वनीयस्यापि पक्षे प्राप्तत्वात् "आह्वनीये जुहोति" इति वाक्येनाह्वनीय-मात्राधिकरणकत्वेनाग्निहोत्रहोमो नियम्यते, एवं सर्वलिङ्गं स्थापयती-त्यनेनापि निरधिकरणकस्थापनैव प्रथमं विधीयते। अधिकरणविशेषा-पेक्षायां पीठाद्यधिकरणवत् पाण्यादेरपि पक्षतः प्राप्तौ पाणिमन्त्रमिति वाक्येन पाण्यधिकरणकमेव लिङ्गपूजनं कर्तव्यमिति नियमो विधीयत इति भावः।

**शंका**—'पाणिमन्त्रं' यह पद पाण्यधिकरणत्व को और 'पवित्रं' यह पद शुचि व अशुचि दोनों काल में लिंगधारण की पवित्रता को बताता है, अतः एक वाक्य में अनेक विधान हो जाने से वाक्यभेद नामक दोष हो जाता है।

**समाधान**—मीमांसाशास्त्र—"आग्नेयोऽष्टाकपालोऽमावास्यायाम्" इस वाक्य में पुरोडाश को उद्देश्य बनाकर अग्निदेवताकत्व और अष्टकपालसंस्कृतत्व का विधान करने से वाक्यभेद का आक्षेप होने पर "प्राप्ते कर्मणि" इस न्याय से अग्निदेवताकत्व विशिष्ट अष्टकपालसंस्कृतत्व विशिष्ट पुरोडाशकरणक अमावास्या-कालिक याग का विधान किया जाता है। इस तरह से एक ही वाक्य होने से वाक्यभेद नामक दोष का परिहार हो जाता है, उसी तरह से "पाणिमन्त्रं पवित्रं" यहाँ भी पाण्यधिकरणकत्वविशिष्ट पवित्रत्वविशिष्ट लिङ्गपूजा का विधान होने से वाक्यभेद नामक दोष नहीं होता, ऐसा समझ लेना चाहिए।

**शंका**—किसी प्रकार से वाक्यभेद दोष का परिहार कर लेने पर भी "सर्वलिङ्गं स्थापयति" इस वाक्य में 'स्थापयति' पद होने से रंगौली से अलंकृत भूमि में चावल से भरे हुए ताम्बे के बरतन रूपी पीठ पर लिंग को रखना चाहिए,

**न चानेकविधाने वाक्यभेद इति वाच्यम्, "आग्नेयोऽष्टाकपालोऽमावास्यायाम्" ( तै० सं० २।६।३।३ ) इत्यत्रैव "अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" (त० वा० २।२।६) इति न्यायेनानेकविधाने दोषाभावादिति ।**

**नन्वेवमपि सर्वलिङ्गं स्थापयतीत्यनेन भूम्यामेव लिङ्गस्थापनं विधीयते, स्थापयतीति पदस्वारस्येन सकलजनाचार-**

---

न चानेकविधान इति । पूज्यमानलिङ्गे पाण्यधिकरणकत्वस्य पावित्र्यस्य चोभयोर्विधावित्यर्थः । आग्नेयोऽष्टाकपाल इति । पुरोडाशमुद्दिश्याग्निदेवताकत्वस्याष्टकपालसंस्कृतत्वस्य च विधानेऽवश्यं वाक्यभेदः स्यात् । अग्निदेवताकत्वाष्टकपालसंस्कृतत्वविशिष्टपुरोडाशकरणकामावास्यायागविधाने तु यथा वाक्यभेदो न मन्यते, एवमेवेहापि पाण्यधिकरणकत्वविशिष्टपवित्रत्वविशिष्टलिङ्गपूजनविधौ नास्ति वाक्यभेदः । तदुक्तम्—"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥" (त० वा० २।२।६) इति ।

नन्वेवमपीति । वाक्यभेदशङ्कायाः परिहारेऽपीत्यर्थः । भूम्यामेवेति । भूमिष्ठताम्रपात्रादिरूपे पीठ इत्यर्थः । स्थापयतीति पदस्वारस्येनेति । "राज-

ऐसा अर्थ दीखता है और "पाणिमन्त्रं पवित्रम्" इस आगे के वाक्य से हाथ से स्पर्श करके मन्त्र का उच्चारण करते हुए वर्ण, पद, मन्त्र आदि षडध्वशोधन से संस्कार करने योग्य है व संस्कार करना चाहिए, ऐसा अर्थ होता है। आगे 'पवित्रं' इस शब्द से आगम की उक्ति के अनुसार भूमि के ऊपर संस्कार करने से लिंग परिशुद्ध हो जाता है, यह अर्थ सिद्ध हो जाता है। यह सम्प्रदाय शैवागम के अनुसार लोक में प्रसिद्ध है, अतः इस प्रकार के अर्थ को छोड़कर देह में लिंग को धारण करना चाहिए, हाथ पर निरन्तर पूजा करनी चाहिए तथा शुचि और अशुचि अवस्था में भी शिवलिङ्ग को देह पर धारण करना चाहिए, इस प्रकार के अप्रसिद्ध अर्थ की कल्पना क्यों की जाय ?

**समाधान**—"सर्वलिङ्गं स्थापयति" इस वाक्य में आया हुआ स्थापयति पद भूमि में भी लिंग की प्रतिष्ठा कर सकते हैं अथवा भक्तों के देह में भी, इस प्रकार के उभयसाधारण अर्थ को बता रहा है। भूमि में ही प्रतिष्ठा करनी है, ऐसा नहीं बता रहा है। मान लीजिए 'स्थापयति' यह पद भूमि में ही स्थापना को बता रहा है, किन्तु ऐसा कहने पर संकोचरहित श्रुति के अभिप्राय को संकुचित

विषयत्वेन च तस्यैवावश्यकत्वात् । तथा च सति पाणिमन्त्रं पवित्रमिति विशेषणमपि पाणिनाऽभिमन्त्रितं षडध्वशोधनादिना संस्कृतम्, अत एव पवित्रमित्यर्थकं सत् सार्थकं भवतीति चेत्, अत्र वदन्ति—स्थापयतीत्यस्य भूमिशरीरसाधारण्येनैव लिङ्गस्थापनविधायकत्वमित्यवसीयते, श्रुतेः संकोचासहिष्णुत्वाद् विनिगमकाभावाच्च । किञ्च, ''सन्दिग्धे तु वाक्यशेषात्'' ( मी० १।४।२९ ) इति न्यायेन पाणिमन्त्रमिति वाक्यशेष-

---

वंशाञ्छतगुणान् स्थापयिष्यति राघवः'', ''कलशं स्थापयति'' इत्यादौ तथैव प्रतीतेरिति भावः । पाणिनाऽभिमन्त्रितमिति । पाणिस्पर्शपूर्वकमन्त्रपाठेन कृतसंस्कारमित्यर्थः । षडध्वशोधनेति । षड्न्यासात्मका अध्वानः शैवागमप्रसिद्धा वीरशैवदीक्षाविधिपुस्तके द्रष्टव्या विस्तरभयान्नेह लिख्यन्ते । तैः शोधनं मन्त्रैर्देवाश्रयत्वकरणं तेन संस्कृतम् । आदिपदेन पूजनादिर्ग्राह्यः । संकोचासहिष्णुत्वादिति । ततश्च भूम्यामेवेति न सिद्ध्यतीति भावः । तावतापि पाण्यधिकरणकपूजामात्रविषयकत्वं न लभ्यमित्याशङ्कायामाह—किञ्चेति । संदिग्धे तु वाक्यशेषादिति । ''अक्ताः शर्करा उपदधाति'' ( तै० ब्रा०३।१२।५।१२) इत्यत्र घृतेन तैलेन वा अक्ता इति सन्देहे ''तेजो वै घृतम्'' ( तै० ब्रा० ३।१२।५।१२ ) इति वाक्यशेषे घृतस्तुतिदर्शनेन घृतेनाक्ता इति निर्णयः सिद्ध्यति । एवमिहापि सर्वलिङ्गं स्थापयतीत्यनेन स्थापनार्हाधिकरणमात्रसाधारण्येन स्थापनविधौ भूमावन्यत्र वेत्यधिकरणविशेषजिज्ञासायां पाणिमन्त्रं पवित्रमिति वाक्यशेषात् पाणावेव लिङ्गस्थापनं प्राप्नोति ।

करना पड़ेगा और इस अर्थ में इस प्रकार का विनिगमक तो नहीं दीख रहा है । इसलिए 'स्थापयति' पद का लिङ्ग को भक्तों के शरीर पर स्थापित करना चाहिये, ऐसा अर्थ करने पर कोई अवरोध नहीं दीखता । इस प्रकार मान लेने पर शिवलिंग की भूमि पर स्थापना करनी है अथवा देह पर, ऐसा सन्देह होने पर ''सन्दिग्धे तु वाक्यशेषात्'' इस मीमांसा न्याय से परिहार कर लेना चाहिए । ''अक्ताः शर्करा उपदधाति'' इस वाक्य में 'अक्ताः' इस पद से चीनी को घी में भिगोना है अथवा तेल में भिगोना है ? ऐसा सन्देह उत्पन्न होने पर इस वाक्य से आगे ''तेजो वै घृतम्'' इस वाक्यशेष से घी में ही भिगोना है और तेल में नहीं, ऐसा निर्णय किया गया है; वैसा ही ''सर्वलिङ्गं स्थापयति'' इस

**बलाच्छरीर एव लिङ्गस्थापनविधायकत्वं सिद्धयति पुराणादौ, मान्य इत्यत्र पूजार्थकत्वेन प्रसिद्धधातुनिष्पन्नस्य मननशब्दस्य पूजार्थकत्वे मननात् पूजनात् त्रायत इति मन्त्रम्, पाणौ मन्त्रं पाणिमन्त्रमिति सिद्धे पाण्यधिकरणकपूजायाः स्थावरेऽप्रसक्त्या शरीरधृतलिङ्गपरत्वावसायात् ।**

**न च पाणिना मननात् त्रायत इति तृतीयासमासाश्रयणेन स्थावरेऽपि न विरोध इति वाच्यम्, तथा सति सापेक्षसमासा-**

---

पाणिमन्त्रमिति शब्दस्य षडध्वशोधनादिसंस्कृतार्थकत्वं शक्त्यभावेन न सिद्धयति । पाणौ पूजनेन त्राणकर्म इत्यर्थस्य गुरुर्मान्य इत्यादौ पूजार्थकत्वेन मन्धातोः प्रसिद्धतयाऽनायासलभ्यत्वमस्तीत्याह—पुराणादाविति । ततश्च पाणिमन्त्रमिति शब्दात् पूजने पाण्यधिकरणकत्ववैशिष्ट्यलाभवत् पाण्यधिकरणकत्वस्य च पूजायाः स्थावरलिङ्गे बाधितत्वेन शरीरधृतलिङ्गविषयकत्वं निश्चीयत इत्याशयः । इदमत्र बोध्यम्—पाण्यधिकरणकत्वविशेषणस्य स्थावरलिङ्गे बाधाच्छरीरधृतलिङ्गमात्रविषयकत्वं यद्यपि सिद्धयति, तथापि नित्यलिङ्गधारणायाः प्रमाणान्तरेण साधनीयतयेह पाण्यधिकरणपूजनमात्रं साधयतीति न दोषः ।

पुनरपि पाण्यधिकरणकत्वमाक्षिपति—न च पाणिनेत्यादिना । पाणिना पाणिधृतविल्वपत्रादिना मननात् पूजनात् त्रायत इत्येवं तृतीयान्तसमासाश्रयणेन स्थावरलिङ्गेऽपि सा पूजा बाधिता न भवतीति कथं तल्लाभ

---

वाक्य के समीप में आये हुए "पाणिमन्त्रम्" इस वाक्यशेष से लिंग को देह पर ही धारण करना है, न कि भूमि पर, ऐसा निर्णय कर लेना चाहिए । इसके अतिरिक्त "मननात् पूजनात् त्रायत इति मन्त्रम्, पाणौ मन्त्रं पाणिमन्त्रम्" इस व्युत्पत्ति के आधार पर पाणिपीठ पर रखकर पूजा करने का विधान भूमि पर प्रतिष्ठित स्थावर लिंग में सम्भव नहीं हो सकता, अतः यह सर्वलिंग वाक्य देह में इष्टलिंग धारण विषयक है, ऐसा निश्चय कर लेना चाहिए ।

**शङ्का**—यहाँ पर सप्तमी तत्पुरुष समास को छोड़ कर "पाणिना मननात् त्रायत इति पाणिमन्त्रम्" इस प्रकार तृतीया समास का आश्रय लेकर हाथ में बेल की पत्ती व फूलों को लेकर लिंग की पूजा करते हुए रक्षा करनी चाहिए,

**श्रयणेन समर्थपरिभाषाभङ्गापत्तेः। सापेक्षत्वेऽपि गमकत्वात् तथाङ्गीक्रियत इति चेन्न, पाणिपदवैयर्थ्यात्।**

इत्याशयः। परिहरति—तथा सतीत्यादिना। ऋद्धस्य राज्ञः पुरुष इति विग्रहे राजन् ङस् पुरुष सु इत्यनयोः समासवारणाय सापेक्षमसमर्थवदिति वार्त्तिकेन सापेक्षेऽसामर्थ्यं बोध्यत इति समर्थः पदविधिरिति परिभाषाबलात् सामर्थ्य-मात्रविषयकत्वात् समासविधायकं शास्त्रं तत्र न प्रवर्तते, एवमेव पाणिना मननात् त्रायत इति विग्रहेऽपि मननशब्दार्थस्य पाण्यंशे सापेक्षतयाऽ-सामर्थ्यात् सुप्सुपेति समासो न भवेदित्याशयः। गमकत्वादिति। देवदत्तस्य गुरुकुलम्, चैत्रस्य दासभार्येत्यादौ गुर्वादिपदार्थस्य देवदत्ताद्यंशे सापेक्षत्वेऽपि विग्रहबोध्यार्थबोधनक्षमत्वात् समासः स्वीक्रियते। यथोक्तं भर्तृहरिणा—'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते॥" (वा० प० ३।१४।४७) इति। अथवा नित्यसापेक्ष-स्थले पूर्वपदार्थघटितसम्बन्धेन समुदायार्थेन सहैव देवदत्तादिपदार्थस्यान्वयः प्रथमं विवक्षितः। अवयवार्थान्वयबोधस्तु फलतः सिद्धयति। अयं प्रकारोऽप्युक्तस्तेनैव यथा—"समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह॥" (वा० प० ३।१४।४८) इति। एवमिहापि मननस्य क्रियारूपतया कारकांशे नित्यसापेक्षत्वान्निष्प्रत्यूहः समासो भविष्यतीत्याशङ्क्य निराकरोति—नेति। पाणिपदवैयर्थ्यादिति।

ऐसा अर्थ सम्भव है। इसलिए यह वाक्य भूमि में प्रतिष्ठित शिवलिंगविषयक है, ऐसा हम कहते हैं।

**परिहार**—इस प्रकार तृतीया समास का आश्रय लेने पर "समर्थः पदविधिः" इस परिभाषा का अनादर हो जायेगा। जैसे "ऋद्धस्य राज्ञः पुरुषः" ऐसा विग्रह करने पर राजन्+ङस्+पुरुष+सु यहाँ पर समास के निवारण के निमित्त "सापेक्षमसमर्थवत्" इस वार्त्तिक से अपेक्षा की आवश्यकता होने पर असामर्थ्य का बोध हो जाने से समासविधायक शास्त्र यहाँ पर प्रवृत्त नहीं होगा, वैसे ही "पाणिना मननात् त्रायते" इस प्रकार विग्रह करने पर मननशब्दार्थ पाण्यंश में अन्य की अपेक्षा करने से असामर्थ्य का ज्ञापन हो जाने से "सुप्सुपेति" इस सूत्र के अनुसार समास नहीं करना चाहिए, ऐसा निर्णय हो जायेगा। लेकिन "देवदत्तस्य गुरुकुलम्", "चैत्रस्य दासभार्या" इत्यादि स्थानों पर गुरुपदार्थ देवदत्तांश की, दासपदार्थ चैत्र पद की अपेक्षा रखने पर भी समास को जैसे स्वीकार कर लिया गया है, वैसे ही मननक्रियारूप होने के कारण कारकांश की नित्य अपेक्षा होने से

**न च मननात् त्रायत इत्युक्ते मानसादीनामपि करणत्वेन प्रसक्त्या तद्व्यवच्छेदार्थं पाणिपदमिति वाच्यम्, "शिवपूजादिकं कार्यं मनोवाक्कायकर्मभिः" इत्यभियुक्तोक्त्या तेषामपि करणत्वप्राप्तेः। किञ्च, तृतीयासमासाश्रयणे एकदेशान्वयापत्तिः। न च सप्तमीतत्पुरुषाश्रयणेऽप्येष दोष इति वाच्यम्, पाणिपदस्य विशिष्टेनैवान्वयस्वीकारादिति।**

---

सप्तम्यन्तत्वेऽधिकरणलाभार्थं तच्चरितार्थमिति भावः। न च तृतीयान्तत्वेऽपि करणलाभाय तदस्त्विति वाच्यम्, "देवान् यजेत" इत्यादाविव पूजामात्र-विधानेऽपि हस्तादेः करणत्वस्यौचित्येनैव लाभादिति।

तद्व्यवच्छेदार्थमिति। मानसादीनां व्यवच्छेदार्थमित्यर्थः। कर्ममात्रे मनःसमवधानस्यावश्यकतया पाणिनैवेति नियमेन तद्व्यवच्छेदेऽपसिद्धान्तापत्तिरित्याह—शिवपूजादिकं कार्यं मनोवाक्कायकर्मभिरिति। विशिष्टेनैवेति। न च तृतीयातत्पुरुषेऽप्येतत्समाधानं सुलभमिति वाच्यम्, उपासकपाणिनिष्ठकरणतानिरूपकत्वस्य परमेश्वरकर्तृकत्राणक्रियायां बाधेन तृतीयासमास के लिए कोई अवरोध नहीं है, ऐसी आशङ्का हो जाने पर पाणि पद के ही व्यर्थ हो जाने की सम्भावना से "पाणिमन्त्रम्" यहाँ पर पाणिपद का सप्तम्यन्त विग्रह करने से अधिकरण का लाभ हो जाने से वाक्य चरितार्थ हो जाता है। "देवान् यजेत" यहाँ पर केवल पूजा का विधान होने पर भी हस्त आदि का करणत्व अपने आप जैसे सिद्ध हो जाता है, वैसे ही तृतीया समास के न करने पर भी हाथ के लिए अपने आप करणत्व का लाभ हो जाता है। इसलिए "पाणिमन्त्रम्" यहाँ पर सप्तमी समास को लेकर देह में लिंगधारण का विधान किया गया है, ऐसा कहना ही उचित है।

**शङ्का**—"पाणिमन्त्रम्" यहाँ पर "मननात् त्रायते" इस प्रकार का विग्रह करने पर पाणि जैसे करण है, वैसे ही मन और वाक् की भी करणता तो सिद्ध हो जायेगी, लेकिन यहाँ पर मन और वाक् के लिए करणत्व की सिद्धि न करके केवल पाणि में करणत्व की सिद्धि के लिए 'पाणि' पद आया है। इसलिए "पाणिना मन्त्रम्" इस प्रकार तृतीया समास का आश्रय लेना ही उत्तम क्यों नहीं है?

**समाधान**—लिंगपूजा आदि कर्म मन और वाक् आदि से करना चाहिए, ऐसा नियम होने से मन का सम्बन्ध सभी कर्मों के साथ अवश्य ही रहता है। मन का अवधान न होने पर कर्म फलप्रद नहीं हो पाता। इसलिए 'पाणिना' इस प्रकार

**यच्चोक्तं पाणिनाऽभिमन्त्रितमिति। तन्न, पुराणप्रसिद्ध-पूजावाचकस्याभिमन्त्रितार्थकत्वे गौणार्थस्वीकारापत्तेः। न चेष्टापत्तिः, ईक्षत्यधिकरणविरोधात्। तत्र–"तत्तेज ऐक्षत।**

---

तत्पुरुषे विशिष्टान्वयस्य बाधितत्वात्। उपासकपाण्यधिकरणकत्वं तु उपासकपाणौ पूज्यमानेश्वरकर्तृकत्राणक्रियायामपि सम्भवत्येवेति सप्तमी-तत्पुरुषे विशिष्टान्वयस्य वक्तुं शक्यत्वात्।

तृतीया समास करके पाणि से ही लिंग की पूजा करनी चाहिए, ऐसा नियम नहीं करना चाहिए। ऐसा मान लेने पर मन आदि में अतिव्याप्ति दोष हो जाने की संभावना है। उस दोष को दूर करने के लिए पाणि पद है, ऐसा कहना चाहे तो इस प्रकार का कथन सिद्धान्त के विरुद्ध पड़ेगा और 'एकदेशान्वय' नामक दोष भी प्राप्त हो जायगा। तब तो "पाणौ मन्त्रं पाणिमन्त्रम्" इस प्रकार सप्तमी तत्पुरुष समास करने पर भी वही दोष आ जाने की आशङ्का होने पर पाणि पद का अर्थ अपने सिद्धान्त में उपासक के हाथ में पूजा किये जाने पर शिवलिंगकर्तृक त्राण क्रिया में उपासक की पाण्यधिकरणता के होने से विशिष्टान्वय हो जाता है। तृतीया समास करने पर उस प्रकार के शिवलिंगकर्तृक त्राण क्रिया में उपासक की पाणिनिष्ठ करणतानिरूपकता का बाध होने से उस प्रकार की विशिष्टान्वयता का मौका नहीं मिलता। इसके ऊपर "पाणिना अभिमन्त्रितम्" ऐसा समास करके भूमि पर प्रतिष्ठित शिवलिंग को पाणि (हाथ) से अभिमन्त्रित करना है, ऐसा अर्थ करने पर मुख्यार्थ को छोड़ कर गौणार्थ को स्वीकार करने का दोष आवेगा। जहाँ मुख्यार्थ से ही निर्वाह हो जाता है, वहाँ गौणार्थ स्वीकार कर लेना दोषावह है, ऐसा शास्त्रकारों का अभिमत है। इतना ही नहीं, वेदान्तशास्त्र के मूलभूत ब्रह्मसूत्र के भाष्य में चर्चित "ईक्ष्यत्यधिकरण" का भी विरोध हो जायेगा। जैसा कि— "ईक्षतेर्नाशब्दम्" यहाँ "ईक्षतेः न अशब्दम्" ऐसा पदविभाग है। अशब्दं = आनुमानिक प्रधान, ईक्षतेः = ईक्षणवत्त्वरूप हेतु से, न = जगत् का कारण नहीं हो सकता। इस प्रकार अवयवों का अर्थ वहाँ बताया गया है। छान्दोग्य में "सत्पदवाच्य वस्तु ही चराचरात्मक इस सृष्टि के पूर्व में थी। उसने अपने आप अनेक रूपों में अभिव्यक्त होने का संकल्प किया" ऐसा सामान्य अर्थ दीखता है। लेकिन इस प्रपंच की उत्पत्ति की कारणस्वरूप यह सत्पदवाच्य वस्तु सत्त्वरजस्तमो-रूप प्रधान है अथवा चेतनस्वरूप ब्रह्म है? इस प्रकार का संशय हो जाता है।

**ता आप ऐक्षन्त'' इत्यादिगौणार्थस्वीकारेण प्रायःपाठानुरोधाद् गौणेक्षितृत्वमादाय प्रधानपरत्वमिति पूर्वपक्षे एकत्र गौणार्थकशब्ददर्शनेऽपि सर्वत्र तथात्वायोगात्, मुख्ये संभवति गौणार्थस्वीकारस्य जघन्यत्वेन च मुख्येक्षितृत्वमादाय ब्रह्मपरत्वमेवेति निर्णयादिति ।**

---

प्रायःपाठानुरोधादिति । ''तत्तेज ऐक्षत । ता आप ऐक्षन्त'' इत्यारोपितेक्षणार्थकेक्षतिबहुलप्रकरणपठितत्वानुरोधादित्यर्थः ।

अत्र वदन्तीत्यादिना सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रमित्यनेन पृथिव्यादिसाधारण्येन स्थापनं विधीयत इति शङ्कां मतान्तरेण समाधाय स्वयं समाधत्ते—अत्र ब्रूम इत्यादिना । एवमेवेदं व्याख्येयम्, अव्यवहितपूर्वग्रन्थेऽसमाहितपूर्वपक्षस्याभावेन स्वारस्येन प्रतीयमानार्थस्य बाधितत्वात् । सर्वोऽयमर्थवाद इति । अनुपदमेव पठ्यमानेन सर्वलिङ्गं स्थापयतीति वाक्येन विहितस्य लिङ्गधारणस्येत्यर्थः । धार्यमाणलिङ्गस्य पूर्वोक्तैर्नमोऽन्तैर्मन्त्रैरुत्कर्षवत्त्वेन बोधनरूपस्तुतिविषयीकृतैः सर्वैरपि लिङ्गैरभेदावसायात् सर्वेषां पूर्वोक्तमन्त्राणां धारणविध्यर्थवादत्वं सिद्ध्यति । एवं विध्यर्थवादत्वसंपत्तावर्थवादभागस्य तद्विषयकशैवागमपर्यालोचनेन धार्यमाणलिङ्गविषयकत्वे निर्णीते विधिभागस्य तथात्वानुपगमे विध्यर्थवादयोर्वैयधिकरण्यं स्यात् । तच्चानिष्टम्, विहितमेव स्तूयत इति मीमांसकसिद्धान्तादित्याशयः । एवं

सांख्यमत के अनुसार सत्त्वरजस्तमोगुणात्मक प्रधान ही सत्पदवाच्य है, ऐसा अर्थ करना होगा । लेकिन प्रधान जड़ होने से लोक की सृष्टि नहीं कर सकता, क्योंकि ''सदेव सौम्येदम्'' इस प्रकार उपक्रम करके बीच में ''तत्तेज ऐक्षत, ता आप ऐक्षन्त'' इस प्रकार कहते हुए अन्त में ''स आत्मा तत्त्वमसि'' इस प्रकार उपसंहार किया गया है । यहाँ षड्विध लिंगों के तात्पर्य से आत्मा ही सत्पदवाच्य है, ऐसा अर्थ करना होगा । लेकिन ''तेज ने देखा, जल ने देखा'' ऐसे स्थानों पर जडस्वरूप तेज और जल का ईक्षणकर्तृत्व मुख्य वृत्ति से संभव नहीं है । इसलिए यहाँ गौणी वृत्ति स्वीकार की जाती है, ऐसे ही प्रधान के लिए भी जगत्कर्तृत्व स्वीकार कर लेते हैं । इसी प्रकार ''पाणिमन्त्रम्'' इस मन्त्र का भी ''पाणिना अभिमन्त्रितम्'' अर्थात् भूमि पर प्रतिष्ठित लिंग को हाथ से अभिमन्त्रित करना चाहिए, ऐसा गौणार्थ स्वीकार कर लेते हैं । ऐसा कहने पर भी एक तरफ गौणार्थ भले ही स्वीकार कर लिया जाय, फिर भी दूसरी तरफ वह अर्थ सम्भव

**अत्र ब्रूमः—"निधनपतये नमः" इत्यारभ्य "एतत्सोमस्य सूर्यस्य" इत्यन्तं सर्वोऽयमर्थवादः। तत्र—"अखण्डमेकं लिङ्गं स्यात् तदेव गुरुणा परम्। भावप्राणेष्टभेदेन त्रिधा भूतं नगात्मजे ॥ इष्टलिङ्गप्रकृतिके आचारगुरुलिङ्गके। पार्थिवाप्ये इति प्रोक्ते शैवागमविशारदैः ॥ प्राणलिङ्गप्रकृतिके तेजोवायुमये तथा। शिवलिङ्गचराभिख्ये लिङ्गे द्वे वरवर्णिनि ॥ व्योमप्रकृतिकं लिङ्गं प्रासादाख्यं महत्तरम्। आत्मतत्त्वमयं**

---

तात्पर्ये निरूपितेऽक्षरयोजनामात्रमवशिष्यते। तत् क्रियते। अवधीयताम्—अखण्डमेकं लिङ्गं स्यात्तदेव गुरुणा परमित्यादि। अत्र गुरुणेत्यनन्तरमुक्तमिति शेषः। यद्वा गुरुणा महता भेदेनेति योजनीयम्। अत्रैवं दशविधलिङ्गानि गणयितव्यानि—अखण्डलिङ्गम् १, भावलिङ्गम् २, प्राणलिङ्गम् ३, इष्टलिङ्गम् ४, पार्थिवरूपमाचारलिङ्गम् ५, आप्यरूपं गुरुलिङ्गम् ६, तेजोमयं शिवलिङ्गम् ७, वायुमयं चरलिङ्गम् ८, व्योमप्रकृतिकं प्रासादाख्यं लिङ्गम् ९, आत्मतत्त्वमेव महालिङ्गम् १०। अत्राखण्डलिङ्गं ब्रह्मस्वरूपम्। अन्येषां स्वरूपाण्युत्तरत्र स्पष्टानि। एतेषां सर्वेषां लिङ्गानां नमोऽन्तैर्दशभिर्मन्त्रैः स्तुतिः क्रियते।

नहीं है। जहाँ पर मुख्यार्थ से निर्वाह हो जाता है, वहाँ पर गौणार्थ स्वीकार करना निन्द्य होने से "पाणौ मन्त्रम्" ऐसा सप्तमी समास का आश्रय लेकर इष्टलिंगपरक अर्थ कहना ही उत्तम पक्ष है और "पाणिमन्त्रं पवित्रम्" इस वाक्य के पीछे देह में और देह पर धारण किये जाने वाले लिंग विषय के ही आने से इस एक वाक्य का भूमि में स्थापित स्थावर लिंगपरक अर्थ करने पर 'प्रकरणविरोध' नामक दोष भी आ जाता है। जैसे कि "निधनपतये नमः" इस प्रकार का उपक्रम करके "एतत्सोमस्य सूर्यस्य" यहाँ तक के वाक्यों में वीरशैव सिद्धान्त के अनुरूप दस प्रकार के शिवलिंगों को दिखाया गया है। इन लिंगों के स्वरूप का वर्णन सिद्धान्तशेखर आदि ग्रन्थों में किया गया है। जैसे कि—हे पार्वति ! अखण्ड ब्रह्मलिंग एक ही है। वह अपने लीलावैभव से भावलिंग, प्राणलिंग और इष्टलिंग के रूप में तीन प्रकार से विभक्त हो गया है। इष्टलिंग आचारलिंग और गुरुलिंग के रूप में विभक्त हो गया है। इनमें से आचारलिंग पृथिवी से सम्बद्ध है और गुरुलिंग जल से। प्राणलिंग शिवलिंग और जंगमलिंग के भेद से दो प्रकार का है। इनमें से शिवलिंग तेजोरूप है और जंगमलिंग वायु रूप। भावलिङ्ग के प्रसादलिङ्ग और महालिङ्ग

"सर्वज्ञाय नमस्तुभ्यमोङ्काराय नमो नमः" इत्यनेन चार्धमात्रास्वरूपौङ्कारस्य परमशिववाचकत्वाभिधानात् ।

न चाकारप्रकृतिकौङ्कारस्य अकारवाच्यविष्णुवाचकत्वमिति वाच्यम्, अशेषवाक्यानामकारप्रकृतिकत्वेन तद्वाच्येनैव वाच्यसिद्धौ शक्तिमात्रोच्छेदापत्तेः, "अकारो वै सर्वा वाक्" (ऐ० आ० २।३।६) इत्यस्य "ओङ्कारेण सर्वा वाक् सन्तृण्णा" (छा०उ० २।२३।३) इतिवत् स्तावकत्वात् । अन्यथा पूर्वपूर्ववर्णानामुत्तरोत्तरविनाश्यत्वेनाकारादित्रयस्यार्धमात्रादिलीनत्वेन तदात्मतापत्त्या तद्वाच्यशिववाचकत्वमिति वैपरीत्यापत्तेः ।

---

शक्तिमात्रोच्छेदापत्तेरिति। विष्ण्वतिरिक्तेऽर्थे कस्यापि पदस्य शक्तिर्न सिद्ध्येदिति भावः। का तर्ह्यकारो वै सर्वा वागित्यस्य गतिरित्यत आह—स्तावकत्वादिति। सन्तृण्णेत्यस्य व्याप्तेत्यर्थः। प्रकृतित्वेन लयाधिष्ठानत्वेन च तिसृणां पूर्वासां मात्राणामर्धमात्रायां लीनत्वेनार्धमात्रावाच्यपरमात्मतत्त्वमात्रवाचकत्वं तासामपि सिद्ध्येदित्याह—वैपरीत्यापत्तेरिति।

के अनन्त वेदागमपुराण आदि के प्रमाणों के आधार पर इस मन्त्र में आया हुआ ॐकार शिवलिंगपरक है, ऐसा स्पष्ट हो जाता है ।

**शंका**—ऊपर के समाधानों से ॐकार शिव को बता रहा है, यह निश्चय हो जाता है, लेकिन वह लिंग को नहीं बता रहा है। इस लिए वह मन्त्र लिंगधारण का विधान कर रहा है, यह बात हम कैसे कह सकते हैं ?

**समाधान**—इस प्रकार के अनेक प्रमाण 'लिंग ॐकारवाच्य है' इसी बात को भिन्न-भिन्न प्रकार से कह रहे हैं। इतना ही नहीं, "जो अपरिच्छिन्न, अव्यक्त, सनातन और ब्रह्मपदवाच्य लिंग है, वह भक्तों की उपासना सिद्धि के निमित्त अपने में ही रहनेवाली माया-शक्ति से परिच्छिन्न स्वरूप का हो जाता है। जिस वस्तु में यह चराचरात्मक जगत् लीन हो जाता है और जिस वस्तु से बार-बार उत्पन्न होता है, उसी वस्तु को लिंग कहते हैं। ब्रह्मा, विष्णु, रुद्र और इन्द्र आदि दिक्पाल गण एवं सनक, सनन्दन आदि महर्षि, सिद्ध, गन्धर्व, दानव, मानव आदि सभी लोग अपने अपने हृदय में निरन्तर उसी लिंग का ध्यान करते रहते हैं। ब्रह्मज्ञानी लोग प्रयत्नपूर्वक उस शिवलिंग का ध्यान करके समस्त क्लेशों से मुक्त हो जाते हैं" ऐसा श्रीरेणुक भगवत्पादाचार्य का स्पष्ट निर्देश है ।

अत एव मङ्गलार्थकत्वमपि सिद्धयति, "समेधयति शं नित्यं सर्वार्थानामुपक्रमे । शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः ।।" (म० भा० ७।१७३।९०), "समा भवन्ति मे सर्वे दानवाश्च सुराश्च ये । शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ।।" (म० भा० ८।२।३-४) इति कर्णपर्वणि शिवपदनिरुक्त्या शिवस्य सर्वमङ्गलप्रदत्वनिश्चयात् ।

न चौङ्कारस्य शिववाचकत्वेऽपि लिङ्गपरत्वे किमायातमिति वाच्यम्, लिङ्गे सुषुप्तिरिति पूर्वोदाहृतहंसोपनिषद्वाक्येन शिवस्यैव लिङ्गरूपत्वावसायात्, 'ओङ्कारं लिङ्गमाख्यात'मित्यागमवचनेन साक्षादेव तत्परत्वाच्च ।

यच्चोक्तं भूतिरुद्राक्षयोरेव धारणेऽन्वय इति, तत्र विकल्पयामः—प्राधान्येनान्वयो वा लिङ्गधारणनान्तरीयकत्वेन वा ?

---

"ओङ्कारश्चाथशब्दश्च" (ना० पु० १।५१।१०) इत्युक्तमोङ्कारस्य मङ्गलार्थकत्वं तु शिववाचकत्वेऽत्यन्तमनुकूलमित्याशयेनाह—'समेधयति शमित्यादिना । मङ्गलवर्धकत्वात्, मङ्गलप्रदत्वात्, मङ्गलरूपत्वाच्च शिवस्य तदर्थकौङ्कारे माङ्गलिकत्वस्यात्यन्तमौचित्यात् ।

किमायातमिति । ओङ्कारस्य लिङ्गपरत्वं न सिद्धयतीति भावः । लिङ्गे सुषुप्तिरिति । हृत्पुण्डरीकावयवदलेषु चरतो जीवस्य लिङ्गप्राप्तौ परमात्मलयापरपर्यायायाः सुषुप्तेः प्रदर्शनाल्लिङ्गस्य परमात्मरूपत्वावसायात् तथा न शङ्क्यमिति भावः ।

भूतिरुद्राक्षधारणस्य लोकशास्त्रसिद्धतया तयोरेव धारणप्रतियोगित्वं कस्मान्नेति पूर्वमाशङ्कितं तन्निराकरोति—यच्चोक्तमित्यादिना ।

ॐकार का मंगलपरक अर्थ करना महाभारत के भी अनुकूल है । जैसा कि "धर्म, अर्थ, काम और मोक्ष नामक चतुर्विध पुरुषार्थ को देकर रक्षा करने के कारण वह शिव कहा कहलाता है अथवा समस्त देव-दानव आदि का सम्पूर्ण मंगल करने के कारण उसका शिव नाम हो गया है" । इस प्रकार महाभारत में शिवपद की निरुक्ति होने से शिव सकलमंगलार्थक, सर्वमंगलप्रद और सर्वमंगलस्वरूप है, ऐसा सिद्ध हो जाता है । इस तरह ॐकार की मंगलार्थता के कारण उसके लिंगधारणपरक अर्थ की पुष्टि हो जाती है ।

नाद्यः तदुपस्थापकपदाभावात् । नहि भूतिरुद्राक्षोपस्थापक ओङ्कार इति कुत्रापि प्रसिद्धम् । न द्वितीयः, इष्टापत्तेः । केचित्तु—अनिराकरणमित्यनेन भूतिरुद्राक्षयोर्ग्रहणम्, ओमिति लिङ्गस्य । तथा च त्रयाणामपि धारणे प्राधान्येनान्वय इत्याहुः ।

यदप्युक्तम्—भूयासमित्यत्राशीर्लिङ्त्वेन न विधिसंभव इति, तन्मन्दम्, "मेधावी भूयासम्" (ऋ० खि० १०।१५१।६), "अहमेकः प्रथममासम्" (अ० शिर० १) इत्यत्रेव तत्संभवात् । न च तत्र विधिप्रयोजकरूपसत्त्वेन तत्संभवेऽप्यत्र तदभावान्न विधिसंभव इति वाच्यम्, अत्रापि "धारयिता भूयासम्" (तै० आ० १०।९।१) इति विहित-लिङ्गधारणं "सर्वलिङ्गं स्थापयति" (तै० आ० १० १६।१) इत्यनेनानूद्य पाणिमन्त्रमित्यधिकरणमात्रविधिरित्यङ्गीकारेऽ-न्यथासिद्ध्यभावेन विधिसंभवात् ।

---

लिङ्गवाचकमोमिति पदमस्ति, भूतिरुद्राक्षवाचकं तु किमपि नास्तीत्याह—पदाभावादिति । इष्टापत्तेरिति । अविरुद्धोक्तिनिराकरण-प्रयोजनाभावादिति तात्पर्यम् ।

अन्यथासिद्ध्यभावेनेति । सर्वलिङ्गं स्थापयतीत्यनेन विहितलिङ्ग-धारणस्य प्राप्तत्वादप्राप्तत्वरूपविधित्वप्रयोजकरूपं नास्तीति भवदभिप्रायः, परं धारयिता भूयासमिति विहितलिङ्गधारणं सर्वलिङ्गं स्थापयतीत्यनेना-नूद्य पाणौ मन्त्रमित्यधिकरणमात्रविधाने विधित्वप्रयोजकरूपमस्त्येवेति परेणोच्यत इत्यालोचनीयम् । "मेधावी भूयासम्" (ऋ० खि० १०।१५१।६)

**शंका**—यह मन्त्र लिंगधारण की मुख्यार्थता का बोधक है, तो भी अन्य देवतापरक व अन्य देवताओं से संबद्ध शंखचक्रधारणपरक अर्थ करने पर क्या बाधा हो सकती है ?

**समाधान**—इस प्रकार अन्य देवतापरक अथवा शंखचक्रधारण परक अर्थ करने पर शैवसिद्धान्त का विरोध होगा, क्योंकि उसके अनुसार शंख, चक्र आदि का धारण निषिद्ध माना गया है । इसके अतिरिक्त प्रकरणविरोध नामक दोष की भी संभावना है । जैसा कि इसी तैत्तिरीय श्रुति के "दहरं विपाप्मं"......

आस्तां वा तावदयमर्थवादः, तथापि न लिङ्गधारण-परत्वं हीयते, "कर्णयोः श्रुतमनिराकरणम्" (तै० आ० १०।९।१) इत्यादिना तस्यैव स्मृतिसमर्पणात्, उक्तरीत्या "दहरं विपाप्मम्" (तै० आ० १०।१०।२३) इत्यस्य "सर्व-लिङ्गं स्थापयति" (तै० आ० १०।१६।१) इत्यस्य च बाह्या-भ्यन्तरलिङ्गधारणपरत्वेन तत्प्रकरणगतस्य "नमो ब्रह्मणे" इत्येतस्य तदन्यपरत्वायोगाच्चेत्यन्यत्र विस्तरः ।

उपबृंहितं चैतदेवमेव ब्रह्माण्डपुराणे—"नमोऽस्तु ब्रह्मणे तुभ्यमाचार्याय महात्मने । तन्निराकरणं विश्वं जन्यत्वान्मृत्यु-

---

इति मेधायाः प्रार्थ्यमानत्वेऽपि पदसामर्थ्यरूपलिङ्गेनानेन मन्त्रेणात्मानं मेधाविनं कुर्यादिति विधेः कल्पनवत् "अहं धारयिता भूयासम्" ( तै० आ० १०।९।१ ) इत्यत्र लिङ्गबलेनैवानेन मन्त्रेण धारणं कुर्यादिति विधेः कल्पनं भविष्यतीति तात्पर्यम् । अहमासमित्यत्र विधित्वशङ्कागन्धोऽपि नास्ति, तथा पीश्वर एव सनातनत्वेन चिन्तनीय इति विधिर्यथा कल्प्यते, तद्वदिति भावः ।

वैपरीत्येऽपि नास्ति काचित् क्षतिरित्याह—आस्तां तावदिति । तथा-पीति । अस्मिन् कल्पेऽनिराकरणत्वप्रणवरूपत्वबोधनेन धृतलिङ्गस्य गुण-स्तुत्योर्लाभादर्थवादत्वं गुणविधित्वं च बोध्यम् । तदन्यपरत्वेति । प्रकरण-बलान्नमो ब्रह्मण इति नमस्कारोऽपि लिङ्गरूपब्रह्मोद्देश्यक एव ।

उपबृंहितमिति । विस्तरेण व्याख्यातमित्यर्थः । मृत्युनेति । "जातस्य मरणं ध्रुवम्" इति नियमाज्जन्यं यावद्विश्वं मृत्युना निराक्रियते । ब्रह्म तु तदुपासितव्यम्" इस मन्त्र से दहराकाश में ज्योतिर्लिंग का धारण और "निधनपतये नमः''''सर्वलिङ्गं स्थापयति" इस वाक्य से स्थूल देह में इष्ट-लिंग के धारण करने का विधान करके 'पाणिमन्त्रम्' इस वाक्य से हथेली पर लिंगपूजा का विधान किया गया है। यहाँ 'पवित्रम्' यह पद शुचि व अशुचि के समय भी लिंगपूजा और लिंगधारण की पवित्रता का विधायक है । इसी प्रकरण में "ॐ नमो ब्रह्मणे धारणम्" (हे गुरु ! मुझे शिवलिंग का धारण कराकर पवित्र करें) इस प्रकार के शिष्य की प्रार्थना से संबद्ध मन्त्र का भी लिंगधारणपरक अर्थ करके अन्य देवतापरक व अन्य शंखचक्रधारणपरक अर्थ करने पर प्रकरणविरोध नामक दोष होता है ।

**नैव हि ॥ अनिराकरणं ब्रह्म कारणत्वाच्चिरन्तनम् । अनिराकरणं मेऽस्तु धारणं देशिकोत्तम ॥ वेदशास्त्रपुराणेषु प्रसिद्धं कर्णयोः श्रुतम् । अहं धारयिता देवो भूयासं सर्वकारणम् ॥ ब्रह्मविष्ण्वादयो देवाः प्रसिद्धाश्च तथा श्रुताः । ते निराकरणाः सर्वे मृत्युना सर्वशत्रुणा ॥ मे निराकरणास्त्वेते नहि धार्य्याः कदाचन । नाहं धारयिता देवान् भूयासं मज्जतः सुरान् । न शक्नुवन्ति मां ततुं मज्जन्तं मृत्युसागरे । ऊर्ध्वं ममेदमोंलिङ्गं मां चामुष्य समाश्रय ॥" इति ।**

---

कारणत्वादर्थाद् मूलकारणत्वान्न केनापि निराक्रियते । तस्मात् तदेवानिराकरणमित्युच्यते, अन्यत् सर्वं निराकरणमित्युच्यते । तेनाहं ब्रह्मण एव धारयिता भूयासं नान्येषां देवानामित्यर्थः । अत्र हेतुमाह—मज्जतः सुरानिति । संसारे स्वयं मग्नाः सुरा अन्योद्धरणं कर्तुं कथं शक्ष्यन्तीति तात्पर्यम् । अत्र देवान् सुरानिति पौनरुक्तिपरिहारः—"वारुणीग्रहणात् सुराः" ( १।४५।३८ ) इति वाल्मीकिरामायणोक्तेः सुरशब्दस्य यौगिकत्वाश्रयणेन करणीयः । मां चामुष्य समाश्रयेति देशिकं प्रति प्रार्थनेयम् । अमुष्य ओङ्कारलिङ्गात्मकस्य समाश्रयणं मां कारयेत्यर्थः ।

इसके अतिरिक्त ब्रह्माण्डपुराण में कहा गया है कि—"हे गुरुश्रेष्ठ ! ब्रह्मस्वरूप एवं महात्मस्वरूप आपको नमस्कार है । यह दीखने वाला प्रपंच एक समय पर उत्पन्न होने के कारण कालान्तर में कालकवलित हो जाता है । सृष्टि, स्थिति और संहार का कारणस्वरूप ब्रह्मशब्दवाच्य शिवलिंग ही सबका कारण है । इसका निराकरण (कभी रहता है और कभी नहीं रहता है) नहीं किया जा सकता । अन्य देवता निराकरण करने योग्य हैं । इस प्रकार सन्मय (शाश्वत) शिवलिंग को ही धारण करना चाहता हूँ, न कि निराकरणयोग्य अन्य देवताओं को । वेदशास्त्र, पुराण आदि में बताये गये इस शिवलिंग को मुझे धारण कराकर कृतार्थ करें । चतुर्मुख ब्रह्मा आदि सभी देवता इस शिवलिंग से उत्पन्न होने के कारण नाशवान् हैं, इसलिए इन देवताओं को धारण करने की मेरी इच्छा नहीं है । इस जननमरण रूप संसार में डूबे हुए ये देवता मुझे इस दुःखसागर से पार नहीं कर सकते । अतः ॐकारपदवाच्य यह शिवलिंग मेरे अंग से कभी भी वियुक्त न हो, ऐसा अनुग्रह आप करें" । इस प्रकार उस मन्त्र में आये हुए "ब्रह्मणे, धारणम्, भूयासम्, अनिराकरणम्, ओं" इन शब्दों का अनुवाद करने से यह स्पष्ट हो जाता है कि यह मन्त्र इष्टलिंग के धारण का विधान करता है, न कि अन्य देवता व अन्य शंख, चक्र आदि प्रतीकों के धारण का ।

स्कान्दे कुमारसंहितायां यात्राखण्डे—"महातपस्विनां चैव यतीनां योगिनां तथा। शाम्भवानां द्विजातीनां शैवानां लिङ्गधारिणाम् ।। महापाशुपतानां च मन्नामव्रतधारिणाम् । मृत्युञ्जयरतानां च ब्राह्मणानां महात्मनाम् ।। पञ्चाक्षररतानां च मत्प्रीत्या द्विजसेविनाम् । सर्वेषामपि सिद्धानां नित्यं देयं गिरोश्वर ।। लिङ्गधारणकं नाम व्रतं माहेश्वराभिधम् । ये धारणं प्रकुर्वन्ति ते यान्ति शिवमन्दिरम् ।। व्रतं पाशुपतं नाम शिवलिङ्गार्चनं शुभम् । षाट्कालिकं त्रिकालं वा एककालं महेश्वरम् ।। ये पूजयन्ति विप्रर्षे ते यान्ति शिवमन्दिरम् ।" इत्यादीन्युक्तार्थोपोद्बलकान्यनुसन्धेयानीति ।

तैत्तिरीयशाखायामेव—"यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात् संबभूव । स मेन्द्रो मेधया स्तृणोतु अमृ-

---

यश्छन्दसामृषभ इति । यद्यपि पूर्वोऽयं च मन्त्रोऽधीतवेदस्याविस्मरणाय धारणाशक्तिप्रार्थनाभिप्रायकः, तथापि पुराणेषु भगवता वेदव्यासेन लिङ्गधारणपरत्वेनापि व्याख्यातत्वात् तत्राप्यस्य तात्पर्यमवश्यं मन्तव्यम् । यश्छन्दसामृषभ इति । वेदानां ऋषभः स्वामी कर्तृत्वेन प्रतिपाद्यत्वेन च

स्कन्दपुराण का निम्न वचन भी इस अभिप्राय का समर्थन कर रहा है। जैसे कि—'हे ब्राह्मणोत्तम ! तपस्वी हो, संन्यासी हो, योगी हो, लिंगधारी हो, पाशुपत हो, द्विजाति हो, शैव हो, शिवव्रती हो, मृत्युंजयव्रती हो, ब्राह्मण हो, अथवा पंचाक्षर-मन्त्रासक्त हो, सबको शिवलिंग-धारण नामक महाव्रत का अनुष्ठान करना चाहिए। जो शिवलिंग-धारण नामक व्रत का आचरण कर रहे हैं, जो लोग शिवलिंग की छः कालों में, तीन कालों में, अथवा एक ही समय पूजा कर रहे हैं, वे लोग पवित्रात्मा होकर शाश्वत शिवानन्द को प्राप्त कर लेते हैं, देह-वियोग के बाद शिव से मिलकर एक हो जाते हैं"। इस प्रकार यहाँ भी लिंगधारण की महिमा का विस्तारपूर्वक नाना प्रकार से वर्णन किया गया है।

इस प्रसंग में तैत्तिरीय शास्त्र का यह मन्त्र भी ध्यान देने योग्य है—यः = जो शिव, छन्दसां = समस्त विद्याओं का अथवा समस्त वेदों का, ऋषभः = कर्ता

**तस्य देवधारणो भूयासम् ।। शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुतम् । ब्रह्मणः कोशोऽसि मेधया पिहितः श्रुतं मे गोपाय" (तै० आ० ७।४।१) इति मन्त्रेणापि तदेव सिद्धयति । "देवधारणो भूयासम्" (तै० आ० ७।४।१)**

---

विश्वरूपः सर्वान्तर्यामी। छन्दोभ्योऽध्यमृतात् सम्बभूवेति। अमृतात् मोक्षार्थम्, फलस्य हेतुत्वविवक्षया पञ्चमी, अध्ययनेन वसतीत्यत्र तृतीयावत्। छन्दोभ्योऽधिसम्बभूव। आधिक्येन ज्ञापित इत्यर्थः। स मेन्द्रो मेधया स्तृणोतु। स इन्द्र ऐश्वर्यवान् परमेश्वरः, मेधया धारणाख्यया बुद्धया मा मां स्तृणोतु आच्छादयतु, योजयत्विति यावत्। अमृतस्य देवधारणो भूयासम्। तादर्थ्यस्य सम्बन्धत्वेन विवक्षायां षष्ठी। मोक्षार्थं देवस्य लिङ्गात्मकशिवस्य धारणो धारणकर्ता भूयासं भवानि। शरीरं मे विचर्षणं भूयादिति विभक्तिविपरिणामेनान्वयः। मे मम शरीरं विचर्षणं दृढं भूयादित्यर्थः। जिह्वा मे मधुमत्तमा प्रियवादिनी भूयात्। कर्णाभ्यां भूरि विश्रुतं भूरि बहु विश्रुतं विशेषरूपेण श्रुतं भूयादिति। ब्रह्मणः कोषोऽसि वेदस्याधारोऽसि। मेधया धारणाशक्त्या पिहितो रक्षितो वेदो मम यथा भवेत्,

होने मे, अथवा वेदों द्वारा प्रतिपाद्य होने से स्वामी है, च = और, विश्वरूपः = सर्वान्तर्यामी है, अमृतात् = मोक्ष के प्रतिपादक, छन्दोभ्यः = वेदों से, अधिसम्बभूव = मुख्यतया ज्ञापित है, स इन्द्रः = परम ऐश्वर्यशाली वह परमेश्वर (परशिव), मा = मुझको, मेधया = इष्टलिंग को धारण करना है, ऐसी बुद्धि से, स्तृणोतु = विशिष्ट करे, अथवा बल प्राप्त करावे। अमृतस्य = मोक्ष के लिए, देवधारणः = देवशब्दवाच्य शिवलिंग को धारण करने वाला, भूयासं = होऊँ। अतः = मुक्तिसाधक इष्टलिंग को धारण करने से, मे = मेरा शरीर, विचर्षणं = पापरहित होवे। मे = मेरी, जिह्वा = जीभ, मधुमत्तमा = रुचिकर वचन बोले। कर्णाभ्यां = कानों से, भूरि = निरन्तर, विश्रुतं = शिवज्ञानयोग्य शास्त्र का श्रवण करूँ। ब्रह्मणः = शिव का, कोशोऽसि = तलवार के आश्रय स्वरूप म्यान की तरह अधिष्ठान हो, मेधया = अज्ञानावृत बुद्धि से, पिहितः = आवरित (ढका) हूँ, मे = मुझे, श्रुतं = भक्ति, ज्ञान आदि का श्रवण कराकर, गोपाय = इष्टलिंग का देह से वियुक्त न हो ऐसी कृपा करें। इस प्रकार यह मन्त्र लिंगधारण एवं मुक्ति का प्रतिपादन कर रहा है।

**शंका**—इस मन्त्र में लिंगवाचक पद नहीं है। 'देवधारणम्' यहाँ देव पद का अवयवों की शक्ति से शिवलिंग अर्थ करने पर अन्य देवताओं से सम्बद्ध अर्थ भी

**इत्यत्र देवशब्दस्य "तं देवतानां परमं च दैवतम्" (श्वे० उ० ६।७) इति, "तस्माद् देवः शिवः स्मृतः" (म० भा०) इति च परमशिवे प्रयोगदर्शनाद् देवतान्तरधारणविधायकप्रमाणा-भावावाचाराभावाच्च धारणशब्दस्य कर्तरि ल्युडन्तत्वेन देवं धरतीत्यर्थे सत्यमृतस्य मोक्षार्थं देवधारणो यतो भूयासम्,**

---

एतदर्थं मे श्रुतं गोपाय मदधीतं रक्षेत्यर्थः। यद्वा धारणाशक्त्या पिहित आच्छादितः पुटके स्थापित इत्यर्थः, लिङ्गरूपेणेति यावत्, एतादृशो भूत्वा मे श्रुतं श्रुतिपुराणादिषु धार्यत्वेन बोधितं तदभिन्नं लिङ्गं गोपाय रक्षेत्यर्थः। मद्देहाद् यावज्जीवं च्युतं यथा न भवेत् तादृशं कुर्वित्यर्थः। देव-शब्दस्य मुख्यया वृत्त्या परमशिवस्यैव बोधकत्वमित्यत्र प्रमाणं दर्शयति— तस्माद्देवः शिवः स्मृत इति। कर्तरि ल्युडन्तत्वेनेति "कृत्यल्युटो बहुलम्" (पा० ३।३।११३) इत्यनेन। अत एव पुल्लिङ्गत्वोपपत्तिः। भावार्थकत्वे तु "नपुंसके भावे क्तः, ल्युट् च" (पा० ३।३।११४-११५) इत्युक्तेर्नपुंसकत्वं

कर सकते हैं, तो लिंगधारणपरक यह अर्थ नियमित रूप से कैसे सिद्ध हो सकता है ?

**समाधान**— मुख्यार्थ वृत्ति से देव शब्द परशिव में जैसे रूढ है, वैसे अन्य देवताओं में रूढ नहीं है। इस विषय पर "तं देवतानां परमं च दैवतम्" (देवताओं में शिव ही परदेवता है), "तस्माद् देवः शिवः स्मृतः" (इससे शिव ही देव पद का मुख्यार्थ है, अन्य देवता नहीं हैं), इस प्रकार के अनेक वचन देव पद का परशिव अर्थ बता रहे हैं। "देवं धारयतीति देवधारणः" इस व्युत्पत्ति से कर्ता के अर्थ में ल्युट् प्रत्यय आने पर देवधारण ऐसा सिद्ध हो जाता है, "अमृतस्य देवधारणो भूयासम्" (मुक्ति के निमित्त देवशब्दवाच्य शिवलिंग का धारण करता हूं) यह अर्थ सिद्ध हो जाता है। इसको न मानकर देव शब्द का अर्थ नारायण आदि अन्य देवतापरक करने पर उस प्रकार के देवताओं को देह में धारण करना, इस अर्थ को बताने वाला कोई प्रामाणिक ग्रन्थ अथवा लोक-व्यवहार भी नहीं दीखता। इससे देव शब्द के आगे का धारण पद भी व्यर्थ हो जाता है। देह में शिवलिंग को धारण करने का विधान वेद, पुराण आदि अनेक प्रामाणिक ग्रन्थ कर रहे हैं। इतना ही नहीं, अनादि काल से हम लिंगधारण करने वालों को भी देख ही रहे हैं।

**अत इन्द्रो निग्रहानुग्रहसमर्थः स लिङ्गरूपः शिवो मा मां मेधया स्तृणोतु संयोजयत्विति पूर्वाचार्यैर्व्याख्यातम् ।**

---

स्यात् । इन्द्रशब्दार्थमाह—निग्रहानुग्रहसमर्थ इति । तादृशसामर्थ्यमेव परमैश्वर्यम् । मेधया स्तृणोत्विति । मेधां विना देवधारणेऽवश्यं प्रमादः स्यात् । स मा भूदेतदर्थमिदं मेधाप्रार्थनं बोद्धव्यम् ।

कैवल्य, अथर्वशिरस्, कालाग्निरुद्र, मुण्डक आदि उपनिषदें ऐसा बता रही हैं कि लिंगधारणरूप पाशुपत व्रत का अनुसरण करने वाला ही ब्रह्मविद्या का अधिकारी हो सकता है । ब्रह्मसूत्र के ''अथातो ब्रह्मजिज्ञासा'' इस प्रथम सूत्र के 'अथ' शब्द का वीरशैव भाष्यकार श्रीपति पण्डिताराध्य इस प्रकार अर्थ करते हैं—

श्रीगुरु शिष्य के स्थूल, सूक्ष्म, कारण नामक तोन शरीरों में अनादि काल से रहने वाले और एक के ऊपर एक रहने वाले आणव, मायीय और कार्मिक नामक मलत्रय का वेधा, मनु और क्रिया नामक दीक्षाओं से निवारण करके और शक्तिपात करने के बाद इष्टलिंगधारण रूप शिवदीक्षा देकर गुरु, लिंग, जंगम, पादोदक, प्रसाद, मन्त्र, रुद्राक्ष ओर भस्म नाम अष्टावरण तथा भृत्याचार, गणाचार, सदाचार, लिंगाचार और शिवाचार नामक पंचाचारों का उपदेश करते हैं । तब वह शिष्य ब्रह्मजिज्ञासा के लिए अधिकारी होता है ।

अन्यत्र भी बताया गया है कि लिंगांगियों का पुनर्जन्म नहीं है । लिंगधारण रूप यह पाशुपत व्रत सांसारिक बन्धन को निवृत्त कर देता हैं । लिंगधारण ही सम्पूर्ण उपनिषदों का सार है । जो ब्रह्मवाच्य शिवलिंग को स्थूल, सूक्ष्म और कारण नामक तीनों शरीरों में भक्ति से धारण करता है और जो इस ब्रह्मलिंग का ध्यान करते हुए दुनियाँ में विचरण करता है, वही पाशुपत कहलाता है । परशिव ही लिंग है । शरीर ही अङ्ग है । इन अङ्ग लिंगों का संयोग ही आश्रय है । ब्रह्मचारी, गृहस्थ, वानप्रस्थ अथवा संन्यासी—इनमें जो भी अपने अंग में लिंग को धारण करता है, वही अत्याश्रमी कहलाता है ।

सामवेद को जैमिनीय शाखा की सदानन्दोपनिषद् कहती हैं कि द्विज मात्र को हृदयाकाश में ज्योतिर्लिंग को धारण करने की सामर्थ्य हो या न हो, किन्तु श्रीगुरु के द्वारा संस्कृत इष्टलिंग को अपने वक्षस्थल पर अवश्य धारण करना चाहिये ।

''यो वामहस्तार्पित'' इत्यादि वचन भी इस बात की पुष्टि कर रहा है। इसका अर्थ इस प्रकार है—ब्राह्मण हो या क्षत्रिय, जो गुरु के द्वारा बायें हाथ पर रखे गये शिवलिंग को निरन्तर धारण करता है, वह निरंजनस्वरूप पर-

अत्रेदं विचार्यते—"यश्छन्दसामृषभो विश्वरूपः" ( तै० आ० ७।४।१ ) इत्ययमनुवाद इत्यभ्युपेतव्यम्, यच्छब्दोपबन्धात् । तस्य च पुरोवादसापेक्षत्वेन—"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" ( तै० आ० १०।११।१२ ) इत्येतन्नारायणोपनिषद्वाक्यमिह पुरोवादः । तत्र च "पद्मकोशप्रतीकाशम्" (तै० आ० १०।११।६) इत्यादिना हृदयं निरूप्य "तस्यान्ते सुषिरम्" (तै० आ० १०।११।८) इति तदन्तर्वर्ति सुषिरं प्रदर्श्य—"तस्य मध्ये महानग्निः" (तै० आ० १०।११।९) इत्यारभ्य—"परमात्मा व्यवस्थितः" (तै० आ० १०।११।१२) इत्यन्तेन तदन्तर्वर्ति सुषिरं प्रदर्श्य परमात्मनः प्रदर्शितत्वेन तथाविधमात्मानं "यश्छन्दसामृषभः" (तै० आ० ७।४।१) इत्यनेनानूद्य "धारणो भूयासम्" इति विधीयते । तथा च देवधारणो देवस्य शिखामध्यवर्तिपरमात्मनो धारणोऽन्तर्धारणो भूयासमित्यर्थे सति

---

यच्छब्दोपबन्धादिति । यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्युक्तेरयमाशङ्कितुराशयः—उद्देश्यताचिह्नभूतेन यच्छब्देन योगात् छन्दसामृषभ इत्युद्देश्यताप्रयोजकं मन्तव्यम्, उद्देश्यतायाश्च सिद्धत्वसापेक्षत्वात् केनचिद्वाक्येन प्राप्तिरत्रापेक्षिता । तच्च वाक्यं नारायणोपनिषदि सन्निहितम्—"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" ( तै० आ० १०।११।१२ )

शिव के स्वरूप को प्राप्त कर लेता है" । यह वचन अथर्ववेद की ऐश्वर्य शाखा का है । इसलिए "यश्छन्दसां····गोपाय" यह और "सर्वलिङ्गं स्थापयति" यह मन्त्र उसी तैत्तिरीय शाखा में बताये गये इष्टलिंगधारण का अनुवाद करते हुए "अमृतस्य देवधारणो भूयासम्" (मोक्ष की प्राप्ति के निमित्त लिंग को धारण करता हूँ ) इस प्रकार लिंगधारण का प्रयोजन दिखलाकर "मेरी जीभ शिव की स्तुति करे, कान शिव से सम्बद्ध कथाओं को सुने, मन तो निरन्तर लिंग में ही आसक्त हो और जननमरण रूप कर्मपाश का नाश हो" इस प्रकार की प्रार्थना को देखने पर यह स्पष्ट हो जाता है कि ये वचन लिंगधारण और उसके फल का समर्थन कर रहे हैं ।

**शंका**—लिंगधारण पूर्वक मोक्ष रूप परम पुरुषार्थ को बताने वाले "यश्छन्दसां····अमृतस्य देवधारणो भूयासम्" इस मन्त्र के पहले की "दहरं विपाप्मम्", "पद्मकोशम्" आदि श्रुतियां हृदयकमल को दिखलाकर "तस्यान्ते

**न लिङ्गधारणसिद्धिः। किञ्चात्र विश्वरूप इति ब्रह्मलिङ्ग-प्रदर्शनेन—ब्रह्मणः कोशोऽसीति निरुपपदब्रह्मपदप्रयोगेण च परमात्मन एवान्तर्धारणप्रतीतेश्चेति चेत्? मैवम्, तन्मते देवधारणो भूयासमित्यत्र देवस्य परमात्मनो धारणमन्तरनु-सन्धानमुपासनमिति फलितम्। तथा च—"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" (तै० आ० १०।११।१२) इत्येतत्पुरोवादप्राप्तस्य तस्य—"दहरं विपाप्मं परवेश्मभूतम्" (तै० आ० १०।१०।२३) इत्यादिना पुरोवादप्राप्ततदुपासना-विषयत्वविधानेन तस्यैव देवधारणो भूयासमित्यत्र विधेयत्वा-ङ्गीकारे पुरोवादाप्राप्तार्थसिद्धिर्न स्यात्, नहि पुरोवादप्राप्त-मनूद्य तदप्राप्तं किञ्चिद्विधातुं प्रवृत्तं वाक्यं तत्प्राप्तमेवार्थं विधाय साफल्यं लभते।**

---

इति, एतदेव धर्तव्यम्। तद्वाक्येन हृदयपद्माकाशवर्ती नारायणः प्रदर्श्यते। ततश्चायमर्थः सम्पन्नः—यो नारायणो हृत्पद्माकाशवर्ती वेदानां स्वामी, तस्य देवस्य धारयिता भूयासम् अन्तरनुसन्धानकर्ता भूयासमित्यादि।

न च तदभिन्नतयाऽध्यवसितायाः शालग्रामादिमूर्तेरपि प्राप्ततया बहि-र्धारणमपि प्राप्तमिति वाच्यम्, तद्धारणस्याचारविरुद्धत्वात्। ततश्च नारा-यणानुसन्धानमात्रमनेन विधीयत इति समाधत्ते—मैवमिति। अयमाशयः—पूर्वोपदर्शितनारायणस्य दहरं विपाप्मं परवेश्मभूतमित्यादिनाऽनुसन्धानरूपो-पासनस्य पूर्वमेव विहिततया तस्यैव देवधारणो भूयासमित्यनेन पुनर्विधाने सम्पूर्णवाक्यस्यैवेदानीं वैयर्थ्यापातान्न तथा वक्तुं शक्यत इति।

सुषिरम्" इस प्रकार उस कमल में अतिसूक्ष्म प्रदेश को दिखलाते हुए आगे "तस्य मध्ये महावह्निः" ऐसा आरम्भ करके "तस्याः शिखाया मध्ये परमात्मा व्यव-स्थितः" (उस ब्रह्मरन्ध्र में परमात्मा रहता है) ऐसा बताया गया है। इन वाक्यों को लेकर विचार करने पर आगे के "यश्छन्दसां····भूयासम्" इस मन्त्र का भी "ब्रह्मरन्ध्र में रहनेवाले ज्योतिर्लिंग को धारण करना" ऐसा अर्थ करना ही उचित है। इस प्रकार का अर्थ न करके इष्टलिंग धारणपरक अर्थ करने से पूर्व और उत्तर के श्रुति-वाक्यों में विरोध होना स्वाभाविक है। इतना ही नहीं,

**अत एव—"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" ( श्वे० उ० ४।१८ ) इत्यत्र "तमः-परे देव एकीभवति" (सु० उ० २।२), "दिव्यो देव एको नारायणः" ( सु० उ० ६।१ ) इति तमःप्रापकवाक्ये तमोऽधिष्ठातृत्वेन नारायणस्य प्राप्तेः शिवपदस्यापि नारायण-परत्वमिति पूर्वपक्षीकृत्य यदा तम इति यदुपबन्धेन तमः-प्रापकनिखिलवाक्यान्तरप्राप्तानुवादपुरस्सरं विधातुं प्रवृत्तस्य "तन्न दिवा न रात्रिः" (श्वे० उ० ४।१८ ) इत्यादिवाक्यस्य शिवपदस्य नारायणपरत्वे पुरोवादाप्राप्तविधायकत्वं न स्यादिति पुरोवादगतनारायणपदस्यैव लक्षणादिना शिवपरत्व-मिति सिद्धान्तितं कर्णामृतादिष्वप्पय्यदीक्षितैः। न चास्य "तस्याः शिखाया मध्ये" (तै० आ० १०।११।१२) इति पुरो-वादतोऽन्तस्तदुपास्यत्वेन प्राप्तमेव परमात्मानमनूद्यामृतस्येत्य-नेन मोक्षरूपं फलं विधीयत इति वाच्यम्, तस्यापि—"ब्रह्मणः**

---

अत एव यदा तम इति। अत एवेत्यस्य यच्छब्दोपनिबद्धवाक्यस्य पूर्व-वाक्याप्राप्तविधायकत्वनियमादेवेत्यर्थः। अत्र दिव्यो देव एको नारायण इति पूर्ववाक्यसान्निध्यात् शिव एव केवल इति शिवपदस्य कथञ्चिन्नारायणपरत्व-मस्त्विति पूर्वपक्षमुत्थाप्य तथा सति—"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" ( श्वे० उ० ४।१८ ) इति वाक्यस्य वैयर्थ्यमेव स्यात्। इदं वाक्यं हि पूर्ववाक्याऽप्राप्तशिवबोधनेनैव चरितार्थम्। शिवपदेन नारायणस्यैव परिग्रहे तु तद्बोधस्य पूर्वमेव गतत्वेन तादृशविधित्वं न स्यादित्यप्पय्यदीक्षितैः सिद्धान्तितम्। न च दर्शिते नारायणपदस्यैव लक्षणा-दिना शिवपरत्वरूपेऽप्यप्पय्यदीक्षितसिद्धान्तेऽपि तद्दोषतादवस्थ्यम्, पूर्वं

इन श्रुतियों में लिंग पद भी तो नहीं दीख रहा है। तब इष्टलिंग धारणपरक अर्थ कैसे किया जा सकता है ?

**समाधान**—"यश्छन्दसां....भूयासम्" इन मन्त्र का इष्टलिंग धारण अर्थ ही न्यायसंगत है। जैसे कि "पद्मकोशप्रतीकाशम्", "तस्यान्ते सुषिरम्", "परमात्मा व्यवस्थितः" इस प्रकार की सूक्ष्मब्रह्मोपासना की प्रतिपादक श्रुतियाँ "अमृतस्य"

**सायुज्यं सलोकतामाप्नोति'' (सदा० उ० १६) इति पुरोवादत एव प्राप्तत्वेन तदप्राप्तत्वाभावात् ।**

**अथ भवन्मतेऽपि देवधारणो भूयासमित्यत्र स्थूलाङ्गलिङ्गधारणविधाने पुरोवादविरुद्धार्थविधानं स्यादिति चेत् ? मैवम्, नहि—"यश्छन्दसामृषभो विश्वरूपः"(तै०आ० ७।४।१) इत्यस्य—"तस्याः शिखाया मध्ये'' (तै० आ० १०।११।१२) इत्ययमेव पुरोवाद इति नियमः, परन्तु सर्वलिङ्गं स्थापयतीत्ययमेव पुरोवादः। तत्प्राप्तमेव स्थूलाङ्गलिङ्गधारणमनूद्य प्रकृतेऽमृतस्येत्यनेन तदप्राप्तमोक्षरूपं फलं विधीयते, अन्यथा वाक्यमेवेदं व्यर्थं स्यात् ।**

---

नारायणस्य पूर्वोक्तत्ववदिदानीं शिवस्य पूर्वोक्तत्वापातादिति वाच्यम्, नारायणपदेन शिवपरिग्रहे रूढ्यंशे चित्तवृत्तेराकृष्यमाणतया शिवस्य स्पष्टप्रतीत्यभावात्, निश्चयात्मकतत्प्रतीत्यर्थं शिव एव केवल इत्यस्यावश्यकत्वात्। अत्रत्यशिवपदेन नारायणपरिग्रहे तु रूढिशक्त्या प्रथममेव निर्णीतप्रतीतिविषयीकृतस्य गौण्या वृत्त्या पुनर्बोधने वैयर्थ्यावश्यंभावात्। यदेत्यादिश्रुत्यर्थस्तु—यदा सृष्टेः प्राक् तमोऽज्ञानात्मकं केवलमासीत्, न दिनं न रात्रिर्न सत् परमाण्वादिकारणं न चासद् महाभूतादिकार्यमासीत्, किन्तु केवलो निरञ्जनः शिव एव तदानीमासीदित्यर्थः। अत्र तमसः सत्ताया अनुपदमेवोक्तत्वात् शिव एव केवल इति कैवल्योक्तिर्नित्याभिव्यक्तचैतन्यवत्त्वेन सजातीयद्वितीयव्यावृत्त्यभिप्राया बोद्धव्या।

पुरोवादविरुद्धार्थेति। तस्याः शिखाया इति पुरोवादे नारायणस्य ध्यानं विहितम्, अत्र बहिर्लिङ्गधारणमिति प्रकरणविरोध इति भावः। परन्त्विति। सर्वलिङ्गं स्थापयतीत्यत्र विहितं सदाशिवात्मकलिङ्गधारणमेवात्रापि देवधारणपदेनानूद्यामृतस्येति मोक्षरूपं फलं विधीयते।

इस श्रुति की पूर्व श्रुतियां हैं, वैसे ही "सर्वलिङ्गं स्थापयति" यह श्रुति भी पूर्व श्रुति है। इस श्रुति में बताये गये इष्टलिंग धारण से प्राप्त होनेवाले मोक्षस्वरूप प्रयोजन को न दिखाने पर इस प्रकार के लिंगधारण के विषय में किसी की भी प्रवृत्ति नहीं होगी, अतः इष्टलिंग धारण से होनेवाले प्रयोजन को दिखाने के लिए "अमृतस्य''''भूयासम्'' यह उत्तर वाक्य आया है। ऐसा सिद्ध हो जाने पर पूर्वोत्तर वाक्यों के विरोध का परिहार हो जायेगा।

**न चेष्टापत्तिः, पूर्वतन्त्रे द्वित्वविधायकवाक्यवैयर्थ्यपरिहाराय—"पञ्चावत्तैव वपा कार्या" (आप० श्रौ० ७।२०।९) इत्यत्र लक्षणां स्वीकृत्य वैयर्थ्यपरिहारः कृतः, इह तु लक्षणां विनैव देवधारणो भूयासमित्यत्र बहिर्लिङ्गधारणे मोक्षरूपफलविधानेन सर्वसामञ्जस्यकरणे को भार इति। न च सर्वलिङ्गवाक्येनान्यथासिद्धिरपि, सामान्येन विशेषफलविधायकस्यान्यथासिद्ध्ययोगात्।**

**नन्वेवमपि—"ज्ञानं महेश्वरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात्" इति स्मरणेन जनार्दनस्य मुक्त्युपायत्वेन कथं लिङ्गोद्देश्यकमुक्तिविधानमिति चेन्न, "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" (श्वे० उ० ४।१४), "ईशं ज्ञात्वाऽमृता भवन्ति" (श्वे० उ० ३।७), "शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य"**

---

न चेष्टापत्तिरिति। वाक्यवैयर्थ्यमिष्टमेवापन्नमिति न वक्तव्यम्, द्विरवद्यतीति वाक्यवैयर्थ्यपरिहारस्य पञ्चावत्तैव वपा कार्येत्यत्र वपापदस्य लक्षणावलेशं स्वीकृत्य कृतत्वेन वाक्यवैयर्थ्येष्टतायाः शून्यहृदयेतरेण वक्तुमशक्यत्वात्।

**शंका**—लेकिन स्मृति में कहा गया है—"ज्ञान को भगवान् शिव से प्राप्त करे और मोक्ष को नारायण से"। इन वाक्यों को लेकर विचार करने पर ऐसा लगता है कि परम पुरुषार्थ रूप मोक्षसुख को प्रदान करने की शक्ति नारायण में है, न कि शिव में। जब ऐसा निश्चय किया गया है, तो लिंगधारण मोक्षसुख का आधार कैसे हो सकता है ?

**समाधान**—श्वेताश्वतर और अथर्वशिखा उपनिषद् में बताया गया है कि परशिव को जानकर ही शान्ति (मुक्ति) को प्राप्त कर सकता है। शिव को जिसने जान लिया है, वह मोक्ष को प्राप्त कर लेता है। केवल एक शिव ही सम्पूर्ण शुभों का आश्रय है, अतः अन्य देवता को छोड़कर केवल शिव का ही ध्यान करना चाहिये। इस प्रकार की अनन्त श्रुतियाँ शिव को ही मोक्षदायक बताती हैं। अतः श्रुति और स्मृतियों का विरोध होता है। यहाँ किसको प्रमाण माना जाय ?

८

**( अ० शिखो० ३ ) इत्यादिश्रुतिभिरितरव्यवच्छेदपूर्वकं शिवस्य मुक्त्युपायत्वावधारणेन श्रुतिस्मृत्योर्विरोधे विरोधाधिकरणन्यायेन स्मृतेर्दुर्बलत्वात् ।**

---

विरोधाधिकरणन्यायेनेति । "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" ( १।३।३ ) इति सूत्रोक्तेनेत्यर्थः । सूत्रार्थस्तु—विरोधे श्रुतिस्मृत्योर्विरोधे, अनपेक्षं श्रुतिः, प्रमाणमिति शेषः । असति वेदवाक्ये साक्षादनुपलभ्यमाने, अनुमानं स्मृतिः प्रमाणं भवतीत्यर्थः । तथा च 'औदुम्बरीं स्पृशन्नुद्गायेत्"इति श्रुतेः "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतेश्च परस्परविरोधे श्रुतिविरोधात् सर्ववेष्टनस्मृतिस्त्यज्यते, तद्वदिहापि "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" ( श्वे० उ० ४।१४ ), "ईशं ज्ञात्वा अमृता भवन्ति" ( श्वे० उ० ३।७ ) इत्यादिश्रुतिविरोधात् "मुक्तिमिच्छेज्जनार्दनात्" इति स्मृतिर्दुर्बला मन्यत इति भावः ।

ऐसा संशय उपस्थित होने पर इसके निवारण के लिए पूर्वमीमांसा शास्त्र में 'विरोधाधिकरण' नामक न्याय की रचना की गई है । वहाँ बताया गया है कि जहाँ पर श्रुति और स्मृतियों में विरोध होता है, वहाँ श्रुतियाँ प्रबल हो जाती हैं । जहाँ इस प्रकार के श्रुति वाक्य नहीं हैं, वहाँ स्मृतियाँ प्रमाण मानी गई हैं । जैसा कि—"औदुम्बरीं स्पृशन्नुद्गायेत्" याग प्रकरण में औदुम्बर ( गूलर ) का स्पर्श करके मन्त्र का उद्गान करना चाहिये, ऐसा श्रुति कहती है । "औदुम्बरी सर्वा वेष्टयितव्या" औदुम्बर वृक्ष को पूर्णतया ढँक लेना है, ऐसा स्मृति कह रही है । यहाँ श्रुति और स्मृति वाक्य में विरोध हो जाता है । इस लिए यहाँ इन दोनों वाक्यों में कौन सा वाक्य प्रबल है, इसका निर्णय करने के लिए शास्त्रीय प्रक्रिया से जब विचार किया जाता है, तब स्पर्श मात्र को बताने वाली श्रुति प्रबल हो जाती है और सम्पूर्ण वृक्ष को आच्छादित करने के लिए आदेश देनेवाली स्मृति दुर्बल हो जाती है । उसी प्रकार "मुक्तिमिच्छेज्जनार्दनात्" ( नारायण से मोक्ष की प्राप्ति होती है ) इस स्मृति वाक्य की अपेक्षा "शिव एको ध्येयः", "ईशं ज्ञात्वा अमृता भवन्ति" इस प्रकार के श्रुतिवाक्य ही प्रबल माने जाते हैं । अतः शिवलिंग की मुक्तिदायकता सिद्ध हो जाती है । इससे "अमृतस्य देवधारणो.....गोपाय" इस मन्त्र का मोक्ष के निमित्त लिंग को धारण करता हूँ, यह अर्थ निश्चित हो जाता है ।

न च—"स मेन्द्रो मेधया स्तृणोतु" (तै० आ० ७।४।१) इति मेधाजनयितृत्वविधानेन तस्याश्चान्तर्धर्मत्वादन्तरुपासनायां तद्धर्मप्राप्तिरेव साध्वीति वाच्यम्, "स नो देवः शुभया स्मृत्या संयुनक्तु" (तै० आ० १०।१०।१९) इति श्रुत्या "लिङ्गाङ्गसङ्गिनो वत्स पुनर्जन्म न विद्यते। युगपज्ज्ञानसंसिद्धिस्ततो मोक्षमवाप्नुयात् ॥" इति शङ्करसंहितावचनेन च मुक्तिजनकज्ञानस्य लिङ्गरूपशिवाधीनत्वात् तस्यैव धारणान्वयावश्यंभावात्। अन्यथा—"कर्मणैव हि संसिद्धिमास्थिता जनका-

---

न च स मेन्द्र इति। मेधाया अन्तःकरणपदार्थत्वात् तत्कारणीभूतमीश्वरधारणमपि कार्यकारणयोः सामानाधिकरण्यायोपासनारूपमेव ग्राह्यमिति प्रश्नः। परमेश्वरस्य सर्वसामर्थ्यवत्त्वेन व्यापकत्वेन च लिङ्गरूपेण शरीरे धृतोऽपि सर्वत्र फलं जनयितुं शक्नोतीत्युत्तरमाह—स नो देवः शुभेत्यादि, लिङ्गाङ्गसङ्ग इत्यादि च। बाह्यकर्मणामपि मनोयोगेन

**शंका**—इस मन्त्र में "स मेन्द्रो मेधयास्तृणोतु" शिवलिंग मुझे प्रज्ञाशक्ति प्रदान करे, ऐसा एक विशेष पद है। यह प्रज्ञाशक्ति देह के अन्तःकरणनिष्ठ धर्म के अतिरिक्त कोई बाह्य पदार्थ नहीं है। इसलिए यह मन्त्र दहराकाश में स्थित ज्योतिर्लिंगोपासना को बता रहा है, न कि बाहर की इष्टलिंगोपासना को।

**समाधान**—ऐसी बात नहीं, क्योंकि "स नो देवः" और "लिङ्गाङ्गसङ्गिनो वत्स" इत्यादि प्रमाणों में परशिव ब्रह्म सर्वसमर्थ और सर्वव्यापक है, अतः उस परशिव ब्रह्म का परिच्छिन्न स्वरूप इष्टलिंग भी मोक्षरूप महाफल को देने में समर्थ है।

**शंका**—बाह्य कर्म मोक्षदायक नहीं हो सकते। उन बाह्य कर्मों में से एक यह इष्टलिंगोपासना भी है, इस लिए यह मोक्षप्रदायक नहीं हो सकती।

**समाधान**—ऐसी बात नहीं है, क्योंकि गीता का कहना है कि जनक आदि राजर्षियों ने उस प्रकार के बाह्य कर्मों के अनुष्ठान से ही मोक्ष को प्राप्त कर लिया था। तीर्थयात्रा, गंगास्नान आदि बाह्य कर्मों से बहुत से लोगों ने मोक्ष पा लिया है। बाह्य कर्म मुक्ति के सहकारी हैं, ऐसा अनेक महर्षि लोग मानते हैं। बाह्य कर्मों को मोक्ष के प्रति सहकारी न मानने पर सबके सब व्यर्थ हो जायेंगे, अतः इनकी

**दयः" (भ० गी० ३।२०) इत्यादिना तीर्थयात्रागङ्गास्नानादीनां मुक्त्युपायजनकत्वं न स्यात्, लिङ्गधारणस्याऽदृष्टद्वारान्तरङ्गत्वाच्चेति ।**

**किञ्चास्य शरीरधृतलिङ्गविधायकत्वे—"शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुतम् ।।" (तै०आ० ७।४।१) इति बहिःपदार्थेषु विशेषविधानमपि सार्थकं भवति ।**

---

क्रियमाणत्वाद् मानसातिशयसम्पादकत्वं शास्त्रसम्मतमित्युच्यते—कर्मणैव हि संसिद्धिमिति । तीर्थयात्रागङ्गास्नानादीनामिति, लिङ्गधारणस्येति च ।

शरीरस्य विचर्षणत्वं जिह्वाया मधुमत्तमत्वं च शरीरस्थमपि वस्त्विह प्रार्थितमस्ति, तदर्थं बाह्यलिङ्गधारणमेवोचितमित्याह—किञ्चेत्यादिना ।

उपयोगिता को मानना ही पड़ेगा । इस प्रकार यहाँ स्थूल देह पर धारण किये जाने वाले इष्टलिंगों की उपासना भी क्रम से आत्मा में अदृष्ट का उत्पादन करती हुई अन्त में मोक्षरूप महाफल को देती है, ऐसा सिद्ध हो जाता है ।

इसके अतिरिक्त इस मन्त्र में "शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुतम्" इस प्रकार स्थूल शरीर में रहनेवाली जीभ के लिए मधुरभाषण और कानों के लिए शास्त्रश्रवणमूलक परिशुद्धि की प्रार्थना होने से "यश्छन्दसां ⋯ गोपाय" यह मन्त्र लिंगधारणपरक है, ऐसा किसी विवाद के बिना निश्चित हो जाता है ।

इस विषय पर लिंगपुराण में भी विचार किया गया है कि जैसे अग्निदेवता वेदोक्त हैं, वैसे ही स्थूल देह में लिंग का धारण करना भी वेदोक्त है । इस तरह से लिंगधारण के लिए वैदिकत्व की सिद्धि हो जाती है । वेद और उपनिषदों में तथा स्कन्द आदि पुराणों में ब्राह्मण के लिए लिंगधारण विहित है । ऋगादि चारों वेदों में जो उत्तम यजुर्वेद है, उसकी जो तैत्तिरीय शाखा है, उसका "यश्छन्दसां⋯गोपाय" यह मन्त्र लिंगधारण मुक्ति का साधन है, ऐसा बोध करा रहा है । जो समस्त वेदों का अधिपति है, ऐसा परम ऐश्वर्य विशिष्ट शिवलिंग मुझे प्रज्ञाशक्ति प्रदान करे । देवशब्दवाच्य उस लिंग को मोक्ष के निमित्त दीक्षापूर्वक परिशुद्ध देह में धारण करने से यह देह पापरहित हो जाता है । मेरी जीभ मधुर भाषण कर रही है । मेरा कान

"रुद्रो भूत्वा यजेद् रुद्रं नारुद्रो रुद्रमर्चयेत्। प्राणलिङ्गाङ्ग-सम्बन्धो स रुद्रो नात्र संशयः ॥" इति शङ्करसंहितावचनेन लिङ्गसम्बन्धादेव शिवाभेदसिद्धया शरीरस्याप्युत्कर्षसिद्धेः, इष्टलिङ्गप्रकृतिकगुरुलिङ्गस्य जलतत्त्वाभिमानिनो जिह्वाग्र-वर्तित्वेन मधुमत्तमत्वप्राप्तेः, भावलिङ्गप्रकृतिकप्रसादलिङ्ग-स्याकाशतत्त्वाभिमानिनः श्रोत्रवृत्तित्वेन भूरिश्रवणसिद्धेः।

---

रुद्राराधने आराधकस्य रुद्रत्वप्राप्तेरपेक्षितत्वात् तस्याश्च लिङ्गधारणा-धीनत्वाल्लिङ्गधारणमवश्यं कर्तव्यमित्युपपादयति—रुद्रो भूत्वा यजेद् रुद्र-मिति। रुद्रत्वप्राप्तौ शरीरदार्ढ्यादिकमर्थादुपपन्नं भवतीति श्लिष्यन्ति श्रुत्य-क्षराण्यपि। इष्टलिङ्गप्रकृतिकेति। ध्रियमाणलिङ्गे जलतत्त्वाभिमानित्वा-काशतत्त्वाभिमानित्वादीनां धर्माणां मान्त्रिकसंस्कारबलात् सम्पादितत्वेन रसनेन्द्रियश्रोत्रेन्द्रियोः सम्बन्धात्—"जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरि विश्रुतम्" (तै० आ० ७।४।१) इत्युपपन्नतरं भवतीत्यतोऽपि बाह्यलिङ्ग-

शिवज्ञान को सुनने को लालायित है। तलवार की म्यान जैसे तलवार का आश्रय लेकर रहती है, वैसे ही यह इष्टलिंग उस निष्कल शिव का आश्रय है। यह लिंग संसार में डूबे हुए मुझ अज्ञानी को ज्ञान और वैराग्य प्राप्त कराकर मोक्ष रूपी सम्पत्ति प्रदान करे। इस प्रकार मन्त्र में आये हुए शरीर, कर्ण, जिह्वा आदि पदों को लेकर महर्षि वेदव्यास इष्टलिंगधारणपरक अनुवाद करते हुए दिखाई पड़ते हैं। यह लिंगधारण वेदों के द्वारा भी उपदिष्ट है, अतः ऐसा कहने में कोई सन्देह नहीं रहता।

फिर शंकरसंहिता कहती है कि रुद्र होकर रुद्र की पूजा करे और रुद्र हुए बिना रुद्र की पूजा न करे। जो दीक्षा संस्कार से परिशुद्ध होकर स्थूल देह में इष्टलिंग को धारण करता है, वही रुद्रस्वरूप है। अतः जब देह लिंग से विशिष्ट होती है, तब इस देह के जीभ आदि अवयवों में पटुता आ जाती है। उस दशा में गुरुलिंग जब सहजतया तत्त्वाभिमानी होने से जीभ पर रहकर रस का आस्वाद करता हुआ मधुर भाषण करता रहता है और भावलिंग का अवयवस्वरूप प्रसादलिंग भी सहज आकाशतत्त्वाभिमानी होने से श्रोत्रेन्द्रिय में रहकर शब्दों को ग्रहण करता हुआ श्रवणसिद्धि को प्राप्त कर लेता है। इस प्रकार इष्टलिंगधारण से अपने में रुद्रत्व की प्राप्ति हो जाने से रुद्र की आराधना के निमित्त "जिह्वा मे

**यच्चोक्तं विश्वरूप इति ब्रह्मलिङ्गस्य निरुपपदब्रह्मपदस्य च परिच्छिन्नलिङ्गधारणपरत्वेऽनुपपत्तिरिति, तदप्यरमणीयम्, भक्तानुग्रहार्थं परिच्छिन्नलिङ्गस्वरूपशिवस्यैवाथर्वशिरः-प्रभृतिषु—"प्राञ्चोऽहं प्रत्यञ्चोऽहम्" ( अ० शिर० १।१ ) इत्यादिना सार्वात्म्योपदेशेन शिवस्यैव विश्वरूपत्वावसायात्, "लिङ्गं तद् ब्रह्मसंज्ञितम्" इत्यपराधस्तवे शङ्कराचार्यैर्लिङ्गे निरुपपदब्रह्मपदप्रयोगकरणेनानुपपत्त्यभावादिति ।**

---

धारणपरेयं श्रुतिर्मन्तव्येत्यभिप्रायः। प्राञ्चोऽहं प्राचीनोऽहम्, प्रत्यञ्चोऽहम् अर्वाचीनोऽहम्। भक्तवात्सल्येन परिच्छिन्नविग्रहं धृतवतः परमेश्वरस्योक्ति-रियम्। अतश्च लिङ्गरूपे परमेश्वरे विश्वरूपब्रह्मपदयोः प्रयोगो नानुपपन्न इति भावः।

मधुमत्तमा, कर्णाभ्यां भूरि विश्रुतम्" यह मन्त्र वाक्पटुत्व और श्रवणयोग्यत्व आदि की प्रार्थना करता है।

**शंका**——इस मन्त्र में 'विश्वरूपः', 'ब्रह्मणः' इस प्रकार के दो साधारण पद हैं। ये सर्वकारण और अपरिच्छिन्न इष्टलिंगधारण परक हैं, वैसा कहने का अवकाश नहीं मिलता। तब ये इष्टलिंग से सम्बन्धित हैं, ऐसा कैसे कह सकते हैं ?

**समाधान**——ऐसी बात नहीं, क्योंकि "प्राञ्चोऽहं प्रत्यञ्चोऽहं प्राचीनोऽहम् अर्वाचीनोऽहम्" अर्थात् मैं पूरब दिशा में हूँ, मैं पश्चिम दिशा में हूँ; मैं पहले भी था, मैं अभी भी हूँ, इस प्रकार की श्रुतियाँ ब्रह्म वस्तुतः अपरिच्छिन्न होने पर भी भक्तों के ऊपर अनुग्रह करने के लिए उन उन समयों में एक एक आकार-विशेष को ग्रहण कर लेता है, ऐसा कहती हैं, अतः लिंग के विश्वरूपत्व और ब्रह्मत्व की सिद्धि हो जाती है। इस विषय में सिद्धान्तशिखामणि का यह वचन प्रमाण है——

परब्रह्म नामक वह महालिंग प्रपंचातीत एवं नाशरहित है। समस्त प्राणियों के आधार, हृदय और भ्रूमध्य (भौहों के बीच में) नामक तीनों स्थानों में चमक रहा है। आगमशास्त्र जिसको ब्रह्म कह रहा है, वही वस्तु अपरिच्छिन्न, अव्यक्त, सनातन होकर अन्तःस्थली में रहकर ज्योतिर्लिंग नाम से प्रसिद्ध है। भक्तों की उपासना की सिद्धि के लिए अपने में अविनाभाव सम्बन्ध से रहनेवाली माया शक्ति से विभाग को प्राप्त होती है।

अन्ये तु "श्रुतं मे गोपाय" ( तै० आ० ७।४।१ ) इत्यत्र गोपायेत्यनन्वयापत्त्या "देवधारणो भूयासम्" (तै० आ० ७।४।१ ) इत्यत्र देवेति पदच्छेदः, तस्य च गोपायेत्यत्रान्वयः, तथा चामृतस्य धारणो भूयासमिति प्राप्त्या न लिङ्गधारणसिद्धिरिति पूर्वपक्षमवलम्ब्य देवपदस्य सन्निधिश्रुतधारणान्वयं परित्यज्य अपरिमिताधिकरणन्यायेन गोपायेत्यत्रान्वयासंभवेन "ब्रह्मणः कोशोऽसि" (तै० आ० ७।४।१) इति सन्निधिश्रुतब्रह्मपदस्यैव विभक्तिविपरिणामेनान्वयः स्वीकरणीयः, अन्यथा धारणपदस्य संयोगार्थकत्वेन तत्रामृतपद-

---

अन्ये त्विति। गोपायेति मध्यमपुरुषैकवचनदर्शनेन देवेति संबोधनं मन्तव्यम्। धारणेत्यत्र चामृतस्येत्यत्र चास्यान्वयः। ततश्च मोक्षस्य धारणो भूयासमित्यर्थलाभान्न लिङ्गधारणं सिद्ध्यतीति पूर्वपक्षः। प्रत्यासत्तिरेवापरमिताधिकरणन्यायेनान्वयनियामिका भविष्यति। न्यायस्वरूपं तु पुरस्तान्निरूपितम्। देवपदस्य प्रत्यासत्त्या धारणपदार्थेऽन्वयस्वीकारेऽपि गोपायेत्यत्र सम्बोधनलाभो भविष्यति। ब्रह्मण इति षष्ठ्यन्तस्य सम्बुद्धिविभक्त्यन्तत्वेन विपरिणामे हे ब्रह्मन् गोपायेत्यन्वयसम्भवात्, दुःखध्वंस-

**शंका**—इस श्रुति में 'गोपाय' ऐसा मध्यम पुरुष के एकवचन का प्रयोग करने से यह सम्बोधन विभक्ति की अपेक्षा रखता है। "देवधारणो भूयासम्" इस वाक्य में "देव इस प्रकार पद का विभाग करके हे देव ! मे = मेरी, गोपाय = रक्षा करो, अमृतस्य = मोक्ष के लिए, धारणः = धारण करनेवाला, भूयासं = होऊँ"। इस प्रकार सामान्यतया अर्थ होता है। इसके अतिरिक्त लिंगधारण रूप विशेषार्थ कैसे कह सकते हैं ?

**समाधान**--ऐसी बात नहीं, "देवधारणो भूयासम्" इस वाक्य के देव पद को सम्बोधन विभक्ति मानकर दूरवर्ती 'गोपाय' इस क्रियापद के साथ अन्वय करने की अपेक्षा 'देव-धारण' इन दोनों पदों का समास करके देव पद का समीपवर्ती धारण पद के साथ अन्वय कर लेना ही उत्तम है ऐसा न करके 'गोपाय' इस क्रिया पद में अन्वय करने पर दूरान्वय नामक दोष तो होगा ही, इसके अलावा मीमांसा शास्त्र में बताये गये 'अपरिमिताधिकरण' नामक न्याय का भी विरोध

वाच्यमोक्षस्यान्वयासंभवादिति समाधानमप्याहुः। अस्याः श्रुतेरुक्तार्थे—"यूयं श्रद्धान्विता विप्राः प्राणलिङ्गाङ्गसङ्गिनः। स्थापयध्वमिमं मार्गं भुक्तिमुक्तिफलप्रदम्॥ मङ्गलात्मशिवलिङ्गधारणं संगवर्जिततनुः कुरुते यः। अङ्गजौर्वदहनं भवसिन्धुं संगभङ्गतरलं प्रतरेत् सः॥ शिवभक्तान् सदाचारनिरतान् धृतलिङ्गकान्। विप्रानाराधय सदा भस्मरुद्राक्षधारिणः॥" इत्यादिशङ्करसंहितावचनानि पूर्वोक्तान्यपि कानिचिदुपबृंहणच्छायापन्नान्यनुसन्धेयानीति।

"विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ। तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम्॥"इति सकलवेदशिखा-

---

रूपमोक्षस्य तु धारणपदबोध्यसंयोगेऽन्वयस्य बाधात् तथा वक्तुं न शक्यत इत्युत्तरम्। उपबृंहणछायापन्नानीति। मङ्गलात्मकशिवलिङ्गधारणमिति धारणपदश्रवणेन देवधारणेति श्रुतिच्छाया गम्यत इति भावः।

विद्यासु श्रुतिरुत्कृष्टेति। ततश्च सर्वविद्याशिरोभूता रुद्रैकादशिनी, तस्यामपि या ते रुद्र शिवा तनूरघोराऽपापकाशिनीति मन्त्रेऽपापेषु भक्तेषु

होता है। 'गोपाय' इस क्रिया पद के समीप में 'ब्रह्मणः' ऐसा एक पद है। इस षष्ठ्यन्त ब्रह्मपद को विभक्ति व्यत्यास से सम्बोधन विभक्ति बना कर हे ब्रह्म! मे = मेरी, गोपाय = रक्षा करो, इस प्रकार का अर्थ करने से सम्बोधन विभक्ति का लाभ हो जाता है और संयोग इस अर्थ को बताने वाले धारण पद का 'अमृत' पद से अन्वय करना भी प्रयोजन का कारण नहीं है। इस लिए देव पद का धारण पद से अन्वय कर लेना ही सर्वोत्तम मार्ग है। इस विषय का समर्थन शंकरसंहिता के "यूयं श्रद्धान्विता विप्राः" इत्यादि वचनों से किया गया है। इस प्रकार के इसी श्रुति के अर्थ को बताने वाले अनन्त छाया वाक्य दीख रहे हैं। इस लिए "यच्छन्दसाम्" यह श्रुति इष्टलिंगधारण का ही विधान कर रही है॥

## यजुर्वेदीय रुद्रानुवाक में लिङ्गधारण

"वेदों में यजुर्वेद श्रेष्ठ है, उसमें एकादश रुद्रमन्त्र श्रेष्ठ हैं और उनकी अपेक्षा अष्टम अनुवाक श्रेष्ठ है उसमें भी पंचाक्षरी श्रेष्ठ है। उस पंचाक्षरी में भी

**मणौ रुद्रैकादशिन्याम्—"या ते रुद्र शिवा तनूरघोरा पापकाशिनी" (तै० सं० ४।५।१।१) इति श्रुतिरपि। रुदं रोदनं संसारदुःखजनितं द्रावयतीति रुद्रः, रुदमज्ञानं द्रावयतीति वा रुद्रः। हे रुद्र अघोरा शान्ताकारा, शिवा सर्वमङ्गलप्रदा, या ते तनुः लिङ्गरूपशरीरम्, सा अपापकाशिनी। लिङ्गरूपशरीरावच्छिन्नः शिवः शमदमसंपन्नो भक्तगात्रे धार्य इति पर्यवसितार्थः। तत्र जागरूकेत्यनुसन्धेयम्। उपबृंहितं च सिद्धान्तशिखामणौ—"अघोरा पापकाशिनी या ते रुद्र शिवा**

---

या ते तनूः शिवलिङ्गरूपा काशते शोभत इत्यर्थके लिङ्गधारणस्य कर्तव्यत्वं प्रतीयते। सिद्धान्तशिखामणिसम्मतोऽयमर्थ इत्याह—उपबृंहितं चेत्यादिना।

"शिव" यह दो अक्षर परम श्रेष्ठ हैं"। इस प्रमाण के अनुसार सर्वश्रेष्ठ रुद्रैकादशी में कहा गया है—

हे रुद्र = दुःखनाशक हे शिव, ते = आपका, अघोरा = शान्त, शिवा = मंगलस्वरूप, या तनूः = जो लिंगरूप शरीर, अपापकाशिनी = पापशून्य भक्तों के शरीरों में प्रकाशमान है, शन्तमया = उस सुखप्रद, तनुवा = सूक्ष्म, तया = लिंगरूप शरीर से, नः = हमारे शरीरों में, अभिचाकशीहि = प्रकाशक होकर रहें।

यहाँ पर शिव का—"रोदनं द्रावयतीति रुद्रः" अथवा "रुद्रम् अज्ञानं द्रावययीति रुद्रः" इस व्युत्पत्ति के अनुसार जननमरण रूप संसार दुःख का नाश करने के कारण अथवा जीवात्मा के आवरक मलत्रय का नाश करने के कारण 'रुद्र' यह नाम पड़ा है।

इस मन्त्र में 'अघोरा' यह पद 'तनूः' इस पद का विशेषण होने से शान्तशरीर ऐसा अर्थ होता है। इसका यह अभिप्राय है कि भगवान् शिव के लिंग और बेर (अलिंग) नामक दो शरीर हैं। इनमें से एक को, जो कर-चरण आदि अवयवों से तथा सर्प, त्रिशूल और बाघ की खाल आदि से विशिष्ट होता है, उसी को अलिंग कहते हैं। लिंग शरीर पीठ, गोमुख, वृत्त, दैर्घ्य और विस्तार नामक पाँच सूत्रों से विशिष्ट होता है, इसलिए इसे लिंग कहते हैं। बेर (अलिंग) शरीर भयावह होने से इसे सोम नाम से पुकारा जाता है। लिंग शरीर अघोर (सौम्य) होने से इसे रुद्र नाम से पुकारा जाता है। यहाँ पर लिंगधारण व लिंग पूजा का विधान केवल अघोर नाम से अभिहित शिवलिंग को बता रहा है, न कि घोर मूर्ति को।

**तनूः । यजुषा गीयते यस्मात् तस्माच्छैवोऽघवर्जितः ॥ यो लिङ्गधारी नियतान्तरात्मा नित्यं शिवाराधनबद्धचित्तः'' ( ६।६१-६२ ) इति ।**

**दर्शयित्वा यजुर्वेदे विधितो लिङ्गधारणम् ।**
**ऋग्वेदेऽपि तथा कुर्यां नत्वा वीरेश्वरं मुदा ।।**

---

समाप्तमिदं प्रकरणं यजुर्वेदेन लिङ्गधारणस्य कर्तव्यताबोधकम्, ऋग्वेदेनापि तत्कर्तव्यत्वसाधनं प्रतिजानीते—ऋग्वेदेऽपि तथा कुर्यामिति । ''अपापेषु काशत इत्यपापकाशिनी'' इस प्रकार विग्रह करने से त्रिविध दीक्षाओं से तीन प्रकार के मलों को नाश करके परिशुद्ध शिव-भक्तोंके हृदय में धारण करने योग्य, ऐसा बोध होने से यह मन्त्र देह में शिव-धारण का प्रतिपादन कर रहा है । 'लिङ्गं तु शिवयोर्देहः' अर्थात् लिंग शक्ति से विशिष्ट परशिव का निवास स्थान रूप देह है, ऐसा शिवागम बोध करा रहा है । श्रीरेणुक भगवत्पादाचार्य शिष्य के शक्तिपात (योग्यता) की परीक्षा करके क्रिया, मनु और वेधा नामक तीन दीक्षारूपी साधनों से त्यागांग, भोगांग और योगांग नामक तीनों शरीरों में अनादि काल से रहने वाले कार्म, मायीय और आणव नामक तीनों मलों का निवारण करके क्रमशः इष्ट, प्राण और भाव नामक तीन लिंगों को धारण करके और उन लिंगों की उपासना के क्रम का बोध करा के लिंगधारण के महत्त्व को बताते हैं—

''चतुर्मुख ब्रह्मा, विष्णु, इन्द्र और अग्नि आदि देवता; गौतम, कणाद, कपिल, पतंजलि आदि महर्षिगण लक्ष्मी, सरस्वती, शची आदि महाशक्तिस्वरूप देवियाँ अपने भाल भाग में शिवलिंग को निरन्तर धारण करते हैं । यह लिंगधारण वेद, आगम और पुराण आदि में विशेष रूप से प्रशंसित है, अतः लिंग को धारण करना ही वीरशैव का मुख्य लक्षण है'' ।

''अघोराऽपापकाशिनी'' इस मन्त्र में अघोरा, अपापकाशिनी, रुद्र, शिव और तनूः आदि पदों को लेकर उनका लिंगधारणपरक अर्थ किया जाता है । अठारह पुराणों के प्रणेता श्रीव्यास महर्षि भी—''हे परमात्मा ! अखण्डैकरसस्वरूप ! आप घोर और अघोर नामक दो शरीरों को धारण करते हैं । इन दोनों में से दीक्षा संस्कार से परिशुद्ध भक्त लोग अघोर नामक (लिंग) की उपासना करते हैं । इस प्रकार के लिंगधारी ही शिष्ट हैं । आपकी इस अघोर मूर्ति के मेरे शरीर में प्रकाशित होने से आप मुझे कभी भी न छोड़कर मेरी रक्षा करें ।

**"पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनुर्न तदामो अश्नुते शृतास इद्वहं स्तत्समाशते ॥" ( ऋ० ९।८३।१ ) इत्यत्र ब्रह्मशब्देन लिङ्गमुच्यते, लीनमर्थं गमयतीति व्युत्पत्त्या, तदधिकरणत्वात् तद्व्यपदेशः। "तल्लिङ्गं ब्रह्म शाश्वतम्" (६।३६), "लिङ्गं ब्रह्म सनातनम्" ( ६।३५ ) इति सिद्धान्तशिखामणौ, "लिङ्गं**

---

पवित्रं ते ब्रह्मणस्पत इति। ब्रह्मशब्देन शिवलिङ्गाभिधाने लिङ्गपदव्युत्पत्तिप्रदर्शनं यद्यप्यनुपयुक्तम्, ब्रह्मपदस्य स्वनिरुक्त्या स्वनिष्ठरूढ्यादिशक्त्या वा प्रवृत्तिमत्त्वात्, तथापि लीनमर्थं गमयतीत्यनेन शिवलिङ्गस्य

इस प्रकार यजुर्वेद के कुछ मन्त्रों से लिंगधारण का प्रतिपादन करके आगे ऋग्वेदीय मन्त्रों से भी लिंगधारण का प्रतिपादन करेंगे।

### ऋग्वेद में लिंगधारण

यजुर्वेद की तरह ऋग्वेद के "पवित्रं ते" इत्यादि मन्त्र में भी लिंगधारण की चर्चा है। मन्त्र का अर्थ इस प्रकार है—

ब्रह्मणस्पते = लिंगरूप शरीर में निरन्तर सन्निहित हे परमेश्वर ! ते = आपके, तत् = वह ब्रह्मपदवाच्य लिंग, पवित्रं = शुचि-अशुचि रूप साधारण काल में भी धारण करने योग्य है। विततं = इष्टलिंग, प्राणलिंग, भावलिंग, आचारलिंग, गुरुलिंग, शिवलिंग, जंगमलिंग, प्रसादलिंग और महालिंग आदि अनन्त रूपों में विभक्त हो, अथवा प्रत्येक भक्त के अंग में धारित होने से अनेक प्रकार के हैं। प्रभुः = निग्रहानुग्रह समर्थ, त्वं = आप, विश्वतः = समस्त, गात्राणि = भक्तों के स्थूल, सूक्ष्म और कारण शरीरों में, पर्येषि = लिंगरूप शरीर के द्वारा व्याप्त हैं। अतप्ततनुः = आणव आदि मलों को नाश करने वाले शिवदीक्षारूपी संस्कार को पाया हुआ, आमः = परिपक्व अन्तःकरण शून्य होने से, तत् = उस शिवलिंग को, नाश्नुते = नहीं प्राप्त करता। इद्वहन्तः = शिवज्ञानवाले, श्रुतासः = शिवलिंग का आश्रय करने मे, तत् = उस इष्ट लिंग को समाशत = प्राप्त कर लेते हैं।

इस मन्त्र में "ब्रह्मणस्पते" इस पद में रहनेवाला "ब्रह्मणः" इस पद का इष्टलिंग इस प्रकार का अर्थ करके आगे के 'पतिः' इस पद का 'लिंगाधिष्ठित परशिव' ऐसा अर्थ करना है। श्रीरेणुक भगवत्पादाचार्य "तल्लिङ्गं ब्रह्म शाश्वतम्",

तद् ब्रह्मसंज्ञितम्'' इति शङ्कराचार्यकृतापराधस्तवेऽपि प्रयोगदर्शनाच्च। तस्य पतिरधिष्ठाता तच्छरीरकः सन् तत्र स्थित इत्यर्थः।

तदित्यध्याहारः, पवित्रपदविततपदयोर्लिङ्गार्थकत्वे कोशाद्यभावेन वृद्धप्रयोगाभावाच्च विशेष्यविशेषणभावासंभवेन विशेषणद्वयान्वयानुपपत्त्या विशेष्यवाचकतत्पदाध्याहारसूचकत्वाच्चेति।

तथा च हे ब्रह्मणस्पते! लिङ्गरूपशरीरावच्छेदेन शरीरिभावेनाधिष्ठितपरमशिव! ते तव, तद् ब्रह्मपदवाच्यलिङ्गरूपं शरीरम्, पवित्रम् उक्तरीत्या शुच्यशुचिकालेऽपि धर्तुं योग्यम्, विततम् इष्टादिभेदेन भक्तशरीरादिभेदेन वा बहुविधम्। प्रभुः निग्रहानुग्रहसमर्थस्त्वं विश्वतः समस्तानि, सार्वविभक्तिक-

---

निगूढतत्त्वप्रतीतिहेतुत्वलाभात् सर्वतो निगूढस्य ब्रह्मणः शरीरत्वप्रतीत्या ब्रह्मपदवाच्यत्वार्हं तद्भवतीत्येतद्बोधयितुं लीनमर्थं गमयतीति लिङ्गपदव्युत्पत्तिर्दर्श्यत इति भावः।

तदित्यध्याहार इति। पवित्रपदविततपदयोर्विशेष्यलाभायेत्यर्थः। एतत्पदद्वयार्थानुपपत्तिरेव तत्पदाध्याहारे प्रमाणमित्याह—अन्वयानुपपत्तिरिति। सूचकत्वाच्चेति चकारः पञ्चम्यर्थहेतुत्वानुवादकः।

समुदायार्थमाह—हे ब्रह्मणस्पत इत्यादिना। शरीरिभावेनेति आत्मरूपेणेत्यर्थः। इष्टभेदेनेति इष्टलिङ्गप्राणलिङ्गाद्यनेकरूपेणेत्यर्थः। भक्तशरीरभेदेनेति प्रतिशरीरं भिन्नभिन्नलिङ्गस्य ध्रियमाणत्वेन भक्तशरीराऽनेकत्वमपि

''लिङ्गं ब्रह्म सनातनम्'' इस प्रकार और श्रीशंकर भगवत्पादाचार्य ''लिङ्गं तद् ब्रह्मसंज्ञितम्''इसप्रकार ब्रह्मपद का 'लिंग' ऐसा अर्थ स्वीकार करते हैं। ''लीनमर्थं गमयतीति लिङ्गम्'' इस व्युत्पत्ति से भी ''तदधिकरणत्वात् तद्व्यपदेशः'' इस उक्ति के बल (समर्थन) से निगूढ निष्कल परमात्मा के लिये इष्टलिंग का आश्रय होने से लिंग को भी ब्रह्म कहा जाता है। इसके अतिरिक्त इस मन्त्र में 'अतप्ततनुः' यह पद ब्रह्म पद का विशेषण होने से वीरशैव सिद्धान्त के अनुसार जिनकी शिवदीक्षा नहीं हुई है, वे इस मुक्तिदायक लिंग को धारण करने के अधिकारी नहीं हैं, इस

**स्तसिल्, गात्राणि भक्तशरीराणि, पर्येषि व्याप्नोषि, धार्यमाणः सन् लिङ्गरूपशरीरद्वारा भक्ताङ्गसंयुक्तोऽसीत्यर्थः ।**

**ननु ब्रह्मणस्पत इत्यत्र ब्रह्मपदेन स्थावरलिङ्गमुच्यते, ततश्च हे ब्रह्मणस्पते ! शरीरिभावेन स्थावरलिङ्गाधिष्ठित-परमशिव ! ते ब्रह्मपदवाच्यं लिङ्गं पवित्रम् अध्वशोधनादिना संस्कृतत्वेन परिशुद्धम्, विततं स्वयंव्यक्तार्षपुरुषकृतादिभेदेन नानाविधमित्यर्थः किं न स्यात् ? इति चेन्मैवम्, स्थावर-**

लिङ्गविततत्वप्रयोजकं बोध्यम् । भक्ताङ्गसंयुक्तोऽसीति । यद्यप्यत्र विधि-बोधको लिङादिर्नास्ति, तथापि श्रुतिबोधितलिङ्गधारणादिसदाचारेण विध्यनुमानं भविष्यतीति तात्पर्यम् । स्वयंव्यक्तार्षपुरुषकृतभेदेनेति । स्वयं

लिए इसको धारण करना चाहिए, ऐसा सिद्ध हो जाता है । "तप्ता तनुर्यस्य स तप्ततनुः, तप्ततनुर्न भवतीति अतप्ततनुः" इस व्युत्पत्ति के बल से शिवलिंग धारण के योग्य दीक्षासंस्कार को जिन्होंने नहीं प्राप्त किया है, वे ही 'अतप्ततनुः' कहे जायेंगे, जो दीक्षासंस्कार को प्राप्त हैं, वे 'तप्ततनु' हैं, ऐसा समझा जाता है । 'आमः' यह पद, इस प्रकार के दीक्षा संस्कार से रहित व्यक्ति की बुद्धि परिपक्व नहीं हो सकती, इस प्रकार के अर्थ का बोधक है ।

**शंका**--इस मन्त्र में रहने वाले 'ब्रह्मणस्पते' पद में जो ब्रह्म पद है, इस पद का जमीन पर प्रतिष्ठित स्थावर लिंग ऐसा भी तो अर्थ कर सकते हैं । हे ब्रह्मण-स्पते ! स्थावरलिंगाधिष्ठित हे परशिव ! ते = आपका, ब्रह्मपदवाच्य स्थावर लिंग, पवित्रं = अध्वशोधन आदि से परिशुद्ध हो गया है, विततं = जमीन से उत्पन्न, अगस्त्य आदि महर्षियों से प्रतिष्ठित और श्रीराम, हरिश्चन्द्र आदि से संस्थापित ( स्वयंव्यक्त, आर्ष और पुरुषकृत ) लिंगभेद से नाना प्रकार का है, ऐसा अर्थ जब सिद्ध हो जाता है, तो यह ब्रह्मपद इष्टलिंगधारणपरक है, ऐसा कैसे निश्चय किया जाय ?

**समाधान**--ऐसी बात नहीं, क्योंकि "पवित्रं ते" इस मन्त्र में "गात्राणि पर्येषि", "अतप्ततनुः" यह विशेष पद जमीन में प्रतिष्ठित लिंग का बोध न करा-कर शरीर में धारण किये हुए इष्टलिंग का ही बोध करा रहे हैं । इस बात को न मानकर सामान्य अर्थ को लेकर स्थावर लिंग परक अर्थ करने पर मन्त्र में आये हुए विशेष पदों का कोई प्रयोजन ही नहीं रह जाता । इसके अतिरिक्त स्वभाव से

**लिङ्गस्य शरीरधारणासंभवेन प्रागुक्तार्थकस्य गात्राणि पर्येषि विश्वत इत्यस्यानन्वयापत्तेः ।**

**न च तस्याप्यपरिच्छिन्नस्वरूपेण भक्तशरीरसम्बन्धोऽस्तीति वाच्यम्, तर्ह्यपरिच्छिन्नत्वेन ब्रह्मलिङ्गविश्वव्यापित्वस्यैव वक्तव्यत्वेन भक्तगात्रमात्रसम्बन्धकथने प्रयोजनाभावात् ।**

**ननु "पवित्रम्" इत्येतन्मन्त्रस्य सोमे दशापवित्रानुमन्त्रणे विनियुक्तत्वेन कथं लिङ्गधारणपरत्वम् ? यद् यत्र**

---

व्यक्तानि लिङ्गानि विश्वेश्वरादीनि ज्योतिर्लिङ्गानि, आर्षाणि अगस्त्येश्वरादीनि, पुरुषकृतानि हरिश्चन्द्रेश्वरादीन्यसंख्यातानि, तद्भेदेनेत्यर्थः ।

न च तस्येति । स्थावरलिङ्गस्यापि परमेश्वराऽभिन्नत्वेन व्यापकतया तस्मिन्नपि गात्राणि पर्येषीत्यंशो बाधितो न भवतीति भावः । प्रयोजनाभावादिति । ब्रह्माण्डमात्रव्यापकस्य भक्तगात्रसम्बन्धित्वोक्ते निष्प्रयोजनत्वोक्तिरुचितैव ।

सोमे सोमयागे । दशापवित्रानुमन्त्रण इति । दशापवित्रं च शुक्लाया अवेरूर्णाभिः सूत्रीकृताभिरोतप्रोतविशिष्टसोमशोधनाधारभूतो वासोविशेषः ।

अणु-रेणु (अणु-अणु में कण-कण में), तृण (घास-पूस), काष्ठ (लकड़ी) आदि में व्याप्त और अपरिच्छिन्न वह ब्रह्मलिंग स्थावरलिंग आदि की अभेद दृष्टि से केवल भक्तों के शरीरों में ही व्याप्त है, ऐसा कहना होगा । यह अर्थ अखण्ड वस्तु को संकुचित स्थान में रखने की तरह हो जाता है । इस की अपेक्षा इस मन्त्र का इष्टलिंगधारणपरक अर्थ करना ही उचित है ।

**शंका**--लेकिन "पवित्रं ...अश्नुते" इस मन्त्र का सोमयाग करते समय 'दशापवित्र' नामके ऊनी के कपड़े में जब सोमरस का शोधन किया जाता है, उस समय विनियोग किया जाता हैं । जिस मन्त्र का जिस प्रकरण में विनियोग किया जाता है, उस मन्त्र का उस प्रकरण के अनुसार अर्थ करना ही उत्तम पक्ष है । इसलिये यह मन्त्र लिंगधारणपरक कैसे हो सकता है ?

**समाधान**--ऐसी बात नहीं, क्योंकि सोमयाग में विनियोग किये जाने मात्र से इस मन्त्र का अर्थ सोमयागीय देवता परक करना है, ऐसा कोई नियम नहीं है ।

विनियुक्तं तस्य तत्परत्वमेव, सन्ध्यावन्दनकालीनतत्तद्देवतोपस्थानविनियुक्तमित्रस्येत्यादिमन्त्राणां तत्तद्देवतापरत्ववदिति। किञ्च, सोमप्रकरणपठितस्यास्य मन्त्रस्य लिङ्गधारणपरत्वे प्रकरणविरोधश्चेति चेत्, तदप्यसारम्, विनियोगमात्रस्य पूर्वोदाहृतप्रयोगावगमितब्रह्मपदलिङ्गपरत्वभञ्जकत्वायोगात्। अस्ति चान्यपराणामपि मन्त्राणामन्यत्र विनियोगः, "अग्निर्मूर्धा दिवः ककुत्" ( ऋ० ८।४४।१६ ) इत्यादिमन्त्राणां वाचकश्रुतिबलादग्न्यादिपराणामेव ग्रहयज्ञे भौमादिपूजायां विनियोगदर्शनात्, "यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम्"

---

विनियुक्तत्वेनेति। कल्पसूत्रे दशापवित्रानुमत्रणाङ्गतया बोधितत्वेनेत्यर्थः। कथं लिङ्गधारणपरत्वमिति। आर्षवाक्येनान्यपरतया बोधितस्यान्यपरत्वं विश्वासानर्हमिति सोमप्रकरणपठितस्य लिङ्गधारणपरत्वोपगमः कर्तुं न शक्यत इति च प्रश्नाशयः। तदप्यसारमिति। तत्तद्यागस्वरूपसम्पत्त्युपयुक्तोपयोगांशबोधनाय प्रवृत्तस्य विनियोगस्य वाक्यशक्त्या प्रतीयमानाङ्गाङ्गिभावाबाधकत्वादिति भावः। तदेव दर्शयति—अग्निर्मूर्धेत्यादि।

इस मन्त्र की अवयव शक्ति से इष्टलिंग को देह में धारण करना चाहिए, ऐसा अर्थ जितना स्फुट है, उतना स्फुट सोमयाग से सम्बद्ध देवतापरक अर्थ नहीं है। जो मन्त्र जिन-जिन देवताओं का बोध करा रहा है, उन-उन मन्त्रों का उन उन देवताओं की आराधना के समय विनियोग करना है, ऐसा भी कोई नियम नहीं है। भिन्न भिन्न देवताओं की प्रशंसा करनेवाले मन्त्रों का उस देवता के सम्बन्ध से रहित कर्मों में भी विनियोग करने का सम्प्रदाय है ही। इसके अतिरिक्त प्रयोग भी देखने में आ रहा है, जैसे कि—"अग्निर्मूर्धा दिवः ककुत्" यह मन्त्र अपनी अवयव शक्ति से मात्र अग्निदेवतापरक है, किन्तु गृहयज्ञ करते समय सूर्यादि नवग्रह पूजा के समय पर भी इस मन्त्र का विनियोग किया गया है। परमेश्वर के सहस्रशीर्षत्व आदि विराट् स्वरूप के बोधक "सहस्रशीर्षा पुरुषः" इस पुरुष सूक्त का "यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम्" इस प्रमाण से कुबेर की पूजा में भी विनियोग किया गया है। इस प्रकार विनियोग करने मात्र से उन उन मन्त्रों का वाच्यार्थ नहीं बदला जा सकता है। इसलिए 'पवित्रम्' इस मन्त्र का सोमयाग

इति देवतान्तरपरस्यापि पुरुषसूक्तस्य धनदयजने विनियोगदर्शनाच्च ।

यद्यत्र विनियुक्तमिति नियमस्तु प्रकृतार्थवाचकपदघटितमन्त्रविनियोगस्थल एव । नहि पवित्रशब्दस्य दशापवित्रार्थकत्वे किञ्चिन्नियामकमस्ति । तर्ह्यभिधायकश्रुत्यघटितविनियोगस्थले प्रकृतप्रकाशनं कथमिति चेत्, "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" ( मै० सं १।५।४ ) इतीन्द्रदेवताकस्य मन्त्रस्य "ऐन्द्रया गार्हपत्यमुपतिष्ठते" ( मै० सं० १।५।११ ) इति गार्हपत्योपस्थानविनियोगेऽपि मन्त्रस्याभिधानश्रुति-

---

भौमादिपूजायामिति मङ्गलादिग्रहादिपूजायामित्यर्थः । देवतान्तरेति । सहस्रशीर्षत्यादिलिङ्गेन विष्णुपरस्यापि कुबेरयागे विनियोगदर्शनान्नैकार्थनिष्ठत्वनियमो मन्त्राणामिति भावः ।

अभिधायकश्रुत्यघटितेति । देवताकर्मप्रकाशनमात्रे मन्त्राणामुपयोगात् तद्वाचकपदाभावे मन्त्रपाठो व्यर्थः स्यादिति भावः ।

कदाचनस्तरीरसि नेन्द्रेति मन्त्रस्यैन्द्रया गार्हपत्यमुपतिष्ठतीति विधिवाक्येन गार्हपत्योपस्थानाङ्गत्वेऽपि स्वघटकपदशक्तिलब्धमिन्द्रविषयकत्वं

में प्रयोग होने पर भी ब्रह्मपदवाच्य इष्टलिंग को दीक्षा संस्कार से परिशुद्ध किये गये देह में धारण करना चाहिए, इस प्रकार के यौगिक अर्थ के किये जाने पर भी कोई बाधा नहीं दीखती ।

जो मन्त्र जिस कर्म में जिस देवता के निमित्त विनियुक्त है, वह मन्त्र उस कर्म में उस देवता का बोध कराता है, यह नियम भी सभी स्थानों पर अन्वित नहीं हो पाता । उन उन प्रकरणों में विनियोजित कुछ मन्त्र जहाँ उन उन कर्मों को, उन उन देवताओं को प्रकाशित कर रहे हैं, केवल उन स्थानों पर ही इस नियम को मानना चाहिए, क्योंकि—"कदाचनस्तरीरसिनेन्द्रसश्चसि दाशुषे" इस प्रकार के इन्द्र (देवता) से सम्बद्ध अर्थ वाले मन्त्र "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इस प्रमाण से गार्हपत्योपस्थान पर विनियोजित होने पर भी मन्त्र के वाच्यार्थस्वरूप इन्द्रदेवताविषयत्व का विरोध नहीं करते । लेकिन इस विधि के आधार पर गार्हपत्योपस्थान का अर्थ लक्षणादि से ही सिद्ध हो जाता है । इसी को

**प्राप्तेन्द्रपरत्वं न हीयते। प्रकृतप्रकाशनं तु लक्षणादिना भवतीत्यैन्द्रयधिकरणन्यायेनावगन्तव्यमिति।**

**यदुक्तं प्रकरणविरोध इति, तदपि न, "सोमः पवते-र्जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्ने-र्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥" (ऋ० ९।९६।५) इत्यत्र जडीभूतसोमलताया नारायणादिजनकत्वा-संभवेनोमया सहितः सोम इति सोमपदश्लेषमहिम्ना शिव-**

---

न बाध्यते, विधिबलाल्लक्षणादिना गार्हपत्योऽप्युपस्थाप्यत इतिवद् इहापि दशापवित्रानुमन्त्रणाङ्गत्वेऽपि स्वार्थपरता न हीयत इति भावः।

पूर्वमापादितं प्रकरणविरोधं समाधत्ते—यदुक्तमित्यादिना, सोमः पवते-र्जनितेत्यादिना। सोमः लताविशेषः, पवतेः पावनस्य यागस्य, मतीनां यागबुद्धीनां स्वरसपरिणामद्वारोत्तमबुद्धीनां दिवो यागफलस्य स्वर्गस्य पृथिवीसूर्येन्द्रविष्णूनां च जनितेत्यर्थ आपाततः प्रतीयते, परन्तु लताविशेषे सूर्येन्द्रादिजनकत्वस्य बाधितत्वाद् उमया सहित इति व्युत्पत्त्या शिवो

"ऐन्द्रयधिकरण न्याय" कहा जाता है। इस न्याय की तरह "पवित्रं····अश्नुते" इस मन्त्र के सोमयाग के दशापवित्र (सोमरस को शोधन करनेवाला वस्त्र) का अंग होने पर भी लिंगधारण रूप वाच्यार्थ के लिए बाधक नहीं है, ऐसा समझ लेना चाहिये।

**शंका**—सोमयाग प्रकरण में बताये गये इस मन्त्र का लिंगधारण प्रकरण में अन्वय करने पर प्रकरण-विरोध नामक दोष क्यों नहीं होगा?

**समाधान**—ऐसी बात नहीं, क्योंकि "सोमः पवते" इस मन्त्र के अनुसार इसका समाधान हो जाता है। इस श्रुति का अर्थ यह है—सोमः = सोमलता, पवतेः = पवित्र याग को, जनिता = उत्पन्न करती है। मतीनां = याग करने की सद्बुद्धि को, जनिता = उत्पन्न करती है। दिवः = याग के फलस्वरूप स्वर्ग की सिद्धि को, जनिता = उत्पन्न करती है। पृथिव्याः = भूमि को, जनिता = उत्पन्न करती है। सूर्यस्य = सूर्य को, जनिता = उत्पन्न करती है। इन्द्रस्य = इन्द्र को, जनिता = उत्पन्न करती है। यहाँ जड़ पदार्थ स्वरूप सोमलता से इन्द्र, सूर्य, विष्णु आदि देवता उत्पन्न हुए हैं, ऐसा कहना सम्भव नहीं है। इसलिये उस

**स्यापि प्रसक्तत्वेन तमादाय तत्सिद्धिरिति सिद्धान्तितत्वेन लिङ्गधारणप्रकरणस्यापि सोमप्रकरणत्वे विरोधाभावात् । किञ्च, "अयं सोमः कपर्दिने" ( ऋ० ९।६७।११ ) इति श्रुत्या सोमयागस्योत्पत्तिविशिष्टशिवसम्बन्धबोधनेन रुद्र आहूत इति श्रुत्या सोमपदस्थाने रुद्रपदप्रक्षेपेण सोमयागस्य रुद्रतादात्म्यबोधनेन—"अहं हि सर्वहविषां भोक्ता चैव फल-प्रदः । सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्थितः ।।" (२।४।८) इति कूर्मपुराणे शिववचनेन च शिवस्य सर्वहविर्भोक्तृत्व-कर्मफलदत्वप्रतिपादनेन सोमयागस्य रुद्रदेवताकत्वनिश्चयात्, तत्प्रकरणपठितस्याप्यस्य मन्त्रस्य लिङ्गधारणपरत्वेन प्रकरण-विरोधाभावाच्च ।**

---

योग्यताबलाद् ग्रहीतुमुचित इति तात्त्विकोऽर्थ इति नास्ति प्रकरणविरोधः । "अयं सोमः कपर्दिने" ( ऋ० ९।६७।११ ) इति श्रुत्या सोमयागस्य कपर्दि-सम्बन्धित्वोक्तेः, सोमागमनोत्तरं रुद्र आहूत इत्युक्त्या रुद्रसोमयोरेकात्मत्व-बोधनेन च सोमयागस्य रुद्रदेवताकत्वबोधनाच्च सोमप्रकरणपठितस्य रुद्रपरत्वे नास्ति प्रकरणविरोध इति भावः ।

सोमपद का "उमया सहितः सोमः" अर्थात् शक्ति से विशिष्ट शिव इस व्युत्पत्ति से शिवपरक अर्थ करना ही उत्तम है । उस प्रकार की शक्ति से विशिष्ट परशिव में सम्पूर्ण देवताओं की जनकता सिद्ध हो जाती है और सोमयाग के रुद्रदेवता से सम्बद्ध होने से प्रकरण का विरोध भी नहीं होता । "अयं सोमः कपर्दिने" इस श्रुति के आधार पर सोमयाग केवल शिव से सम्बद्ध है, ऐसा स्पष्ट हो जाता है । "रुद्र आहूतः" इस श्रुति में सोम पद के स्थान पर रुद्र पद का प्रयोग करने से सोम और रुद्र दोनों एक ही स्वरूप वाले हो जाते हैं—"अहं हि सर्वहविषाम्" कूर्मपुराण का यह वचन भी इसी अर्थ की पुष्टि करता है कि समस्त देवताओं के शरीर की आकृति में समस्त हवि को ग्रहण करने वाला, सभी प्रकार के फल को देनेवाला मैं अकेला ही हूँ । इस प्रकार के भगवान् शिव के उपदेश से सोमयाग रुद्रदेवतात्मक है, ऐसा निश्चय हो जाता है । अतः "पवित्रं····अश्नुते" इस मन्त्र का सोमयाग में विनियोग किये जाने पर भी लिंगधारणपरक अर्थ करने पर प्रकरणविरोध नामक दोष नहीं होगा ।

नन्वास्तां तावदुक्तरीत्या प्रकरणाद्यविरोधः, तथापि पवित्रं त इत्येतन्मन्त्रे लिङाद्यभावेन न विधिसंभवः, न वा विधिप्रयोजकरूपसंपत्तिः, एतन्मन्त्रविहितलिङ्गधारणस्य तत्पावित्र्यस्य च सर्वलिङ्गं स्थापयतीति विधिप्राप्तत्वेनान्यथा-सिद्धत्वात्, इति चेन्मैवम्, "तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्" इति वक्ष्यमाणोपबृंहणानुरोधेन, "प्रभुर्गात्राणि पर्येषि विश्वतः" ( ऋ० ९।८३।१ ) इति मन्त्रलिङ्गेन च तल्लिङ्गं धार्यमिति कल्पयितुं शक्यत्वात् ।

---

लिङाद्यभावेनेति । एतच्च श्रुतिबोधिताचारेण विधिकल्पनायामुपयुक्त-त्वेन समाहितम् । "तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्" इत्येतन्मन्त्रोपबृंहकपुराणवाक्यम्, "प्रभुर्गात्राणि पर्येषि" (ऋ० ९।८३।१) इति लिङ्गं च विधिकल्पनायामनुकूलमित्याह—मैवमिति ।

**शंका**—लेकिन यह मन्त्र लिंगधारण का प्रतिपादन करने पर भी विध्यर्थ को बताने वाले लिङ्-लोट्-तव्य आदि प्रत्ययान्त पद इस मन्त्र में न होने से लिंगधारण विधायक मन्त्र नहीं हो सकता । "व्रीहीन् प्रोक्षति", "व्रीहीनवहन्ति" आदि स्थानों पर उस प्रकार के लिङ् आदि प्रत्ययों के न होने पर भी विधि-प्रयोजक रूप को पूर्वमीमांसाकारों ने जैसे मान लिया है, वैसे ही यहाँ पर मान भी लें, तो भी इस मन्त्र के द्वारा दीखने वाला लिंगधारण, इस लिंग की पवित्रता और लिंगधारण की योग्यता का सम्पादक दीक्षासंस्कार—ये सब "सर्वलिङ्गं स्थापयति" इस यजुर्वेदीय मन्त्र से ही उक्त हो गये हैं । इस प्रकार एक वाक्य से एक नियम का विधान करने के बाद दूसरे वाक्य से उसी नियम का विधान करने पर अपूर्वविधि का लक्षण भंग हो जाता है । इतना ही नहीं अन्यथासिद्ध नामक दोष भी आ जाता है, तो यह प्रतिपादन कैसे ठीक हो सकता है ?

**समाधान**—इस प्रतिपादन में कोई दोष नहीं है, क्योंकि "सर्वलिङ्गं स्थापयति" यह वाक्य यजुर्वेद का वाक्य है और "पवित्रं ते" यह वाक्य ऋग्वेदीय वाक्य है । इस प्रकार जब वेद ही भिन्न हैं, तब तो अपूर्वविधि का कोई अवरोधक ही नहीं है । एक वेदवाक्य को लेकर दूसरे वेदवाक्य को अन्यथासिद्ध नहीं कह सकते । इस नियम को न मानकर भिन्न-भिन्न शाखाओं में आये हुए वेदवाक्यों को

यदप्यन्यथासिद्धत्वेन विधिप्रयोजकरूपं नास्तीति प्राचीनग्रन्थेनोक्तम्, तदप्ययुक्तम्, शाखाभेदात् । नहि शाखान्तरविहितकर्मणां शाखान्तरेऽन्यथासिद्धिसम्भवः, तथा सति यजुःशाखाविहितकर्मणामेव केषाञ्चिद् ऋग्वेदविहितत्वेन तद्विधायकवाक्यानां प्रवर्तकत्वानुपपत्तेः । इत्यलं प्रसक्तानुप्रसक्त्या ।

एवं पवित्रं त इत्यारभ्य पर्येषि विश्वत इत्यन्तेन लिङ्गधारणं तत्पावित्र्यं च विधायानेकश्रुतिविहितत्वेऽप्यत्यन्ताभ्यर्हितफलाभावाल्लिङ्गधारणमकर्तव्यमिति केषाञ्चिज्जडानामाशापिशाचिकोच्चाटनार्थं भगवती श्रुतिरेवमुक्त्वा उपाया-

---

शाखाभेदादिति । वेदभेदादित्यर्थः । सर्वलिङ्गमिति वाक्यं कृष्णयजुः, "पवित्रं ते विततं ब्रह्मणस्पते" ( ऋ० ९।८३।१ ) इति मन्त्रस्तु ऋक् । ततश्च वाक्यद्वयस्य भिन्नशाखावृत्तित्वेन नास्त्येकेनापरस्यान्यथासिद्धिरिति । शाखाभेदेऽप्यन्यथासिद्ध्यङ्गीकारेऽग्निहोत्रादिकर्मणामनेकशाखासु विहितत्वेन तद्बोधकवाक्यानां सर्वेषामेव स्वेतरकृतान्यथासिद्धत्वापत्त्या कस्यापि वाक्यस्य विधायकत्वं न सिद्ध्येदिति भावः ।

अन्यथासिद्ध कहने पर अग्निहोत्रादि कर्म ऋग्वेद में जैसा बताया है, वैसा यजुर्वेद में भी बताया है. अतः प्रमाणान्तरों से प्राप्त हो जाने से इस प्रकार के अग्निहोत्रादि कर्मों को भी अन्यथासिद्ध नामक दोष से ग्रस्त कहना होगा । इसलिये भिन्न शाखाओं में बताये गये वाक्यों को एक से दूसरे का सम्बन्ध न जोड़कर सब के सब विधिवाक्य हैं, ऐसा स्वीकार कर लेना है । इससे इस सन्दर्भ में "पवित्रं ते" इस मन्त्र के भिन्न शाखा में उक्त होकर लिंगधारण विधायक होने से अन्यथासिद्ध नामक दोष नहीं कह सकते ।

**शंका**—इस मन्त्र में लिंगधारणत्व और पवित्रत्व आदि स्पष्ट होने पर भी उससे मिलने वाले फल को न बताने से फलरहित उस लिंगधारण को क्यों माना जाय ?

**समाधान**—लिंगधारण और मोक्ष इन दोनों का कार्यकारणभाव सम्बन्ध है । लिंगधारण कारण है और मोक्ष कार्य है । जहाँ कारण है वहाँ कार्य है, यही अन्वय-व्याप्ति है । जहाँ पर कारण नहीं है, वहाँ पर कार्य भी नहीं है, यही व्यति-

न्तरव्यवच्छेदसूचनाय व्यतिरेकमुखेन लिङ्गधारणस्य प्रयोजकत्वमभिवदति।

"अतप्ततनुर्न तदामो अश्नुते" ( ऋ० ९।८३।१ ) इति तप्ता वेधामनुक्रियादीक्षात्रयेण निर्दग्धपापपञ्जरा तनुर्यस्य, सा न भवतीत्यतप्ततनुर्दीक्षात्रयरहितः, आमः अपरिपक्वाऽन्तःकरणः सन् तत्परशिवस्वरूपं नाश्नुते। एवं च—"लिङ्गाङ्गसङ्गिनो वत्स पुनर्जन्म न विद्यते" इति शङ्करसंहितावचनानुरोधेन दीक्षात्रयमेव मुक्तावसाधारणकारणमिति फलितार्थः।

---

व्यतिरेकमुखेनेति। लिङ्गधारणरूपमोक्षकारणाभावे मोक्षरूपकार्यस्याभावो भवतीत्येवं मोक्षाभावे लिङ्गधारणाभावव्यापकत्वबोधनमुखेन। ततश्च लिङ्गधारणाभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिर्लिङ्गधारणस्य मोक्षे सिद्धा भवति। ततश्च लिङ्गधारणरहितानां मोक्षो न भवतीत्युक्त्या लिङ्गधारणस्य मोक्षप्रयोजकत्वं लभ्यते।

दीक्षात्रयेणेति वेधादीक्षामनुदीक्षाक्रियादीक्षाभिरित्यर्थः। पापपञ्जरेति। पञ्जरं पक्षिणां नियन्त्रितवासस्थानम्। तद्वदावरकत्वात् पञ्जरत्वं पापेऽप्यारोप्यते।

रेक-व्याप्ति है। जहाँ पर धूम ( धुंआँ ) उठ रहा है, वहाँ अग्नि होती है, ऐसा कहना ही इस अन्वय व्याप्ति का दृष्टान्त है और जहाँ धूम नहीं उठ रहा है, वहाँ पर अग्नि भी नहीं रहतो, यह कहना ही व्यतिरेक-व्याप्ति का दृष्टान्त है। मोक्ष की अपेक्षा रखने वाला वीरशैव दीक्षा से परिशुद्ध होकर लिंग को धारण करे, जो मोक्षापेक्षी नहीं है, उनको लिंगधारण करने की कोई आवश्यकता नहीं है। इस प्रकार मोक्षाभाव में लिंगधारणाभाव का व्यापकत्व बोधनपूर्वक लिंगधारण रहित वीरशैवों को मोक्ष की प्राप्ति नहीं होगी, ऐसी व्यतिरेक-व्याप्ति से लिंगधारण की सिद्धि हो जाती है। मुख्यतया "अतप्ततनुर्न तदामो अश्नुते" इस उत्तरार्ध मन्त्र में वेधा-क्रिया-मनु नामक ( तीनों ) दीक्षाओं से आणव आदि मलों को जो नाश नहीं कर पाता, वह अपक्वमति मनुष्य शिवस्वरूप को नहीं प्राप्त कर सकता, ऐसा स्पष्टतया बताया गया है। इस कथन के समर्थक और भी शंकरसंहिता आदि के वचन हैं। इस प्रकार के प्रमाणों से लिंगधारणरूप दीक्षा को जिन्होंने नहीं

**रामानुजमतानुयायिनस्तु—"पवित्रं चरणं चक्रम्" इति कोशप्रसिद्धचा पवित्रपदं चक्रार्थकम्, ब्रह्मणस्पत इत्यत्र ब्रह्म-पदं चतुर्मुखब्रह्माभिधायि, तस्य पतिः—"नारायणाद् ब्रह्मा जायते" ( नारा० अ० १ ) इति श्रुत्या जनकत्वेनाधीश्वरः। तथा च हे ब्रह्मणस्पते चतुर्मुखाद्युत्पादक, ते पवित्रं चक्रं विततम्। प्रभुः निखिलभुवननियामकस्त्वं गात्राणि भक्ता-**

---

एवं स्वमते पवित्रं ते ब्रह्मणस्पत इति ऋङ्मन्त्रस्य लिङ्गधारणपरत्वं व्यवस्थाप्य रामानुजाचार्याभिमतस्यैव मन्त्रस्य तप्तमुद्राधारणपरत्वं निराकर्तुमुपक्रमते—रामानुजमतानुयायिनस्त्वित्यादिना। कोशप्रसिद्धचेति। अयं कोशः साम्प्रतिककोशपुस्तकेष्वनुपलभ्यमानतया कल्पित इवाभाति।

ग्रहण किया है, वे मोक्षरूप महाफल को प्राप्त नहीं कर सकते, इस प्रकार अनुमान कर लेने के कारण मोक्षरूप कार्योत्पत्ति के लिए लिंगधारण ही असाधारण कारण है, ऐसा स्पष्ट हो जाता है।

पहले के आचार्यों ने वेद मन्त्रों का अपने-अपने मत के अनुसार व्याख्यान किया है। उसी प्रकार वीरशैव मताचार्य इस "पवित्रं ते" मन्त्र का लिंगधारण-परक अर्थ और विशिष्टाद्वैत मताचार्य तप्तचक्रधारणपरक अर्थ (व्याख्यान) करते हैं। इस प्रकार कामधेनु और चिन्तामणि से जैसे अपनी-अपनी इच्छा के अनुसार वस्तु प्राप्त की जाती है, वैसे ही इन मन्त्रों से अर्थ प्राप्त कर लेते हैं। इस मन्त्रों में ऐसी शक्ति है। इस प्रकार भिन्न भिन्न व्याख्यान इसलिये करते हैं कि एक आचार्य का अभिप्राय दूसरे आचार्य को पसन्द नहीं है। अपने से उपासित देवता-विषयक मन्त्रार्थ के प्रतिपादन में तुष्टि न मिलने पर उसी मन्त्र को प्रकारान्तरों से उपासक के समर्थक अर्थ का आविष्कार कर लेते हैं। इससे अपनी आराध्य देवता में उपासकों की आसक्ति एवं प्रवृत्ति का मार्ग प्रशस्त करना ही उन लोगों का मुख्य उद्देश्य है। अन्य देवता की निन्दा अथवा अन्य देवताओं का विरोध करना उन लोगों का उद्देश्य नहीं है। इसी अभिप्राय से प्रत्येक मत के आचार्य—"नहि निन्दा" इस न्याय का उदाहरण देते हैं। यहाँ पर "पवित्रं ते" इस मन्त्र को लेकर श्रीरामानुजाचार्य—हे ब्रह्मणस्पते = चतुर्मुख ब्रह्मोत्पादक हे नारायण! ते = आपका, पवित्रं = चक्रायुध, विततं = विस्तार वाला है। प्रभुः = सकल भुवनों के नियामकस्वरूप आप, गात्राणि = भक्तों के शरीरों को, पर्येषि = व्याप्त कर लेते हैं।

ङ्गानि पर्येषि प्राप्नोषीत्यर्थः । अत एव—"अतप्ततनुर्न तदामो अश्नुते" (९।८३।१) इत्यप्यन्वर्थकम् । तप्ता वह्नि-सन्तप्तचक्रेण पूर्वरूपपरावृत्तिपूर्वकरूपान्तरप्रादुर्भावा तनुर्यस्य तादृशो न भवतीत्यतप्ततनुः दोर्मूलचक्रधारणरहितः, तन्नारा-यणात्मकपरब्रह्मस्वरूपम्, आमः अपरिपक्वान्तःकरणो नाश्नुते न प्राप्नोतीत्यर्थ इति व्याचक्रुः, तदप्यश्रद्धेयम् । यद्यपि "पवित्रं चरणं चक्रम्" इति धूर्तवैष्णवकल्पितस्य कोशत्व एव विवादः, तथापि तुष्यतु दुर्जन इति न्यायेनाभ्युपेत्य निराक्रियते, मन्त्रे चक्रधारणविधायकाभावात् । न च—"गात्राणि पर्येषि विश्वतः" ( ऋ० ९।८३।१ ) इत्येतद्विधा-यकम्, तस्य विष्णोरेव भक्ताङ्गसम्बन्धविधायकत्वात् ।

ननु पवित्रं त इति विष्णुसम्बन्धिचक्रमभिधाय गात्राणि पर्येषि विश्वत इत्यनेन धारणविधानान्नारायणस्य धारणा-

---

भक्ताङ्गानि पर्येषीति प्रत्यासत्त्या तप्तचक्रसंयोगजनिताङ्करूपेणेत्यर्थः । अस्मिन् मतेऽतप्ततनुरिति तप्‌धातुप्रयोगः प्रसिद्धार्थक एव परिगृह्यत इति तेषामभिप्रायः । धूर्तवैष्णवकल्पितस्येति । उपलभ्यमानकोशपुस्तकेष्वनुपलम्भ एव तत्कल्पितत्वचिह्नमिति भावः । चक्रधारणविधायकाभावादिति । लिङाद्यभावादित्यर्थः । गात्राणि पर्येषीति सिद्धवदनुवादेन लिङ्गधारणपक्ष इवात्रापि विधेरनुमानं भविष्यतीति नाशङ्कनीयम्, ब्रह्मणस्पते इति सम्बोध्य पर्येषीति मध्यमपुरुषप्रयोगेण नारायणस्य भक्ताङ्गसङ्गित्वलाभेऽपि चक्रस्य तदलाभात् । स्वमते तु शिवलिङ्गस्य शिवाभिन्नत्वेन शिवस्य भक्ताङ्गसङ्गित्वलाभे शिवलिङ्गस्य तल्लब्धं भवति । तप्तमुद्राङ्कने तु विष्ण्वभिन्नत्वं वैष्णवग्रन्थेष्वपि नास्तीति नास्ति निरूढमित्याशयः ।

इसलिए अतप्ततनुः = तप्त ( दागे हुए ) चक्र का प्रतीक रहित व्यक्ति, तत् = उस नारायण के स्वरूप का, आमः = चित्त, उनका ( भक्त का ) अपक्व ( अपरिशुद्ध ) होने से, नाश्नुते = साक्षात्कार नहीं कर पाता है । इस प्रकार की व्याख्या करते हैं ।

प्रसिद्धचा तदीयचक्रस्यैव तत्सिद्धिरिति चेत्? मैवम्, विकल्पासहत्वात्। तथाहि—चक्रस्य तल्लाञ्छनत्वेन धार्यत्वम्, उत तत्स्वरूपत्वेन, आहोस्विन्नारायणाश्रयत्वेन? नाद्यः, "कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः" (अ० को० १।१।२८) इति कोशावगमिततल्लाञ्छनानां बहुशः सत्त्वेन तस्यैव धार्यत्वे विनिगमकाभावात्। न द्वितीयः, तत्स्वरूपत्वे तदभेदसिद्धौ चक्रनारायणयोर्भेदगर्भितलाञ्छनिलाञ्छनभावासम्भवेन तद्बोधककोशविरोधापत्तेः। तृतीयेऽपि—"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (त० आ० १०।११।५) इति श्रुतिबोधितशर्वान्तर्यामिभावेन तदाश्रयत्वमुत शरीरिभावेन? नाद्यः पक्षः शोभां कलयते, अन्तर्यामिभावेन नारायणस्य सकलपदार्थवृत्तित्वेन सर्वेषामपि धारणीयतापत्तेः। नोत्तरः पक्षः, शरीरिभावेन स्थित्यङ्गीकारे शालग्रामवैष्णवपूज्य-

---

ननु तन्मते शालग्रामादेर्धारणाप्रसिद्धया पवित्रपदेन चक्रस्य प्रत्यासन्नतया तद्धारणद्वारैव नारायणस्य व्यापकत्वमभिप्रेतम्? इत्याशङ्क्य निराकरोति—मैवमिति। भेदगर्भितेति। "शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम्" (अ० को० १।१।२८) इति कोशे लक्ष्मीपतेरिति षष्ठीबोधितस्वस्वामिभावसम्बन्धाक्षिप्तभेदगर्भितेत्यर्थः।

तृतीयेऽपि नाराणाश्रयत्वेन चक्रस्य धार्यत्वमिति कल्पेऽपि। आश्रयत्वं विचारयति—अन्तरित्यादिना। अयं भावः—"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (तै० आ० १०।११।५) इति श्रुत्या वर्तमानस्य नारायणस्य चक्रेऽपि वृत्तितालाभान्नारायणाश्रयत्वं चक्रस्य स्वीक्रियते, आहोस्विच्चक्रस्य नारायणशरीरतया शरीरेषु जीवानामिव चक्रे नारायणस्यात्मरूपेण स्थिततया नारायणाश्रयत्वं मन्यत इति भावः। नाद्यः पक्ष इत्याह—सर्वेषां धारणीयत्वापत्तेरिति। घटपटादीनामपि तदानीं धारणीयत्वादित्यर्थः। नाप्युत्तरः पक्ष इत्याह—शरीरिभावेनेत्यादि। शालग्रामेति। शालग्राम इव वैष्णवैः पूज्या ये ताम्रादिमयभगवद्विग्रहाः,

ताम्रादिविग्रहालयप्रतिष्ठिततत्तत्प्रतिमास्विव बाहुमूलधार्य-चक्रादावपि नारायणस्य पूजानिवेदनादिकरणापत्तेः।

यदुक्तम्—"अतप्ततनुर्न तदामो अश्नुते" (ऋ० ९।८३।१) इत्यनेन तत्सिद्धिरिति, तदपि निर्मुक्तनीरदाकाशे वर्षधाराशा-मेवानुकरोति। "ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रिता। सा चेत् सन्तापिता राजन् किं वक्ष्याम्यस्य पातकम्॥ गङ्गा-स्नानरतो वापि ह्यश्वमेधरतोऽपि वा। चक्राङ्किततनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः॥ जपेच्च पौरुषं सूक्तमन्यथा रौरवं व्रजेत्। भुजाग्रे व्यानते विप्रस्तप्तचक्राङ्कितो यदि। वेदाग्नि-ज्ञानवान् सोऽपि दहत्या सप्तमं कुलम्॥" इत्यादिधर्मशास्त्र-वचनैस्तप्तमुद्राधारणस्य निषिद्धत्वेन तत्परत्वेन व्याख्याना-सम्भवेऽस्मदुक्तरीत्यैव व्याख्येयत्वात्। किञ्चास्य मन्त्रस्य सोमप्रकरणपठितस्य चक्रधारणपरत्वे प्रकरणविरोधश्च। न चास्मन्मते तदापत्तिः, पूर्वमेव निरसितत्वात्।

यद्येवमपि "अतप्ततनुः" (ऋ० ९।८३।१) इत्यस्य ह्यव-सानगत्या चक्रसन्तप्तशरीरार्थकत्वमेवाङ्गीकरोषि, तदा

---

तेषामालयेषु मन्दिरेषु प्रतिष्ठिता यास्तत्तत्प्रतिमाः, तासु इव बाहुमूलधृत-चक्रादौ गन्धपुष्पादिभिः पूजायाः करणीयत्वापत्तेः।

तप्तशरीरस्य ब्राह्मणस्य मोक्षलाभस्तु दूरे तिष्ठतु, वर्तमानमपि ब्राह्म-णत्वमपैति, ब्राह्मणशरीरस्य सर्वदेवमयत्वेन तद्दहनप्रयुक्तं महत्पापमेव प्रत्युतोत्पद्यत इत्याह—ब्राह्मणस्य तनुर्ज्ञेयेत्यादिना। न चास्मन्मते तदा-पत्तिरिति। लिङ्गधारणपरत्वोपगमकल्पे तस्य सोमप्रकरणपठितत्व-प्रयुक्तप्रकरणविरोधस्यापत्तिर्नास्तीत्यर्थः। कथमित्याह—पूर्वमेव निरस्तत्वा-दित्यर्थः। सोमपदे उमया सह वर्तत इति व्युत्पत्त्याश्रयणेनेत्यर्थः।

अवसानगत्येति। अन्ततो गत्वेत्युक्तिवदियमुक्तिर्बोद्धव्या। अतप्त-तनुरित्यस्य विष्णवे तप्ता तनुर्यस्येत्यादिव्याख्यानं यद्यप्यत्यन्तक्लिष्टम्, तथापि तप्ता चक्रतापितेत्यादिवैष्णवैः कृतस्य व्याख्यानस्यापि क्लिष्टत्वात्

"अकारो विष्णुवाचकः" इति स्मरणेन आय विष्णवे, विष्ण्वर्थमिति यावत् । तप्ता तनुर्यस्य सोऽतप्ततनुः । एवं-भूतः आमः अपरिपक्वान्तःकरणः सन् तत् परब्रह्मस्वरूपं नाश्नुते, परन्तु "श्रीञ् पाके" ( १४७६ क्र्या० ) इति धातोः श्रृताः सन्तप्ताः सन्त इत्तापजन्यं किणं वहन्तस्तत्किणमेव समाशते प्राप्नुवन्तीत्येवार्थः स्यात्, प्रागुक्तनिषेधानुरोधात् ।

अथैवमपि पवित्रपदस्य कोशप्रसिद्ध्या चक्रार्थकत्व-मावश्यकम्, तथापि न पावित्र्यादिबोधः, रूढेर्योगापहारकत्वा-दिति चेन्न, सति बाधके कोशस्य शक्तिग्राहकत्वानङ्गी-कारात् । अत एव नीलो घटः, शुक्लः पट इत्यादौ "गुणे

---

"तपोमूलमिदं सर्वं तपोमध्यं तपोऽन्तकम् ॥ ऋषयः संयतात्मानः फलमूला-निलाशिनः । तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥" (११।२३४,२३६) इत्यादिमनुस्मृत्यादिभिर्वर्णितस्य तपस एव अतप्ततनुरित्यत्र तप्धातुना ग्रहीतुमौचित्येन तदनुरोधेनातप्ततनुरित्यादेः कृच्छ्रचान्द्रायणपरमेश्वरा-राधनादिनाऽक्लेशितशरीरस्तद्ब्रह्मपदं नाश्नुत इत्याञ्जस्येन प्राप्तव्याख्या-विरुद्धत्वाच्च यादृशो यक्ष इति न्यायेन तन्निराकरणायैवं व्याख्यातमिति बोध्यम् । ननु लिङ्गधारणपरतया व्याख्यानेऽपि तपःपरकव्याख्यानविरोध-स्तुल्य एवेति चेत्, मैवम्, यावज्जीवं शिवलिङ्गावियोगरक्षायाः, यावज्जीवं प्रत्यहं तत्पूजननिर्वाहस्य च परमतपोरूपत्वात् । तथैवाग्रेऽपि प्रतिद्वन्द्वि-रूपार्थभावनापत्तियोग्यत्वबोधनाभिप्रायेणैव व्याचष्टे—श्रीञ् पाक इत्यादि । नन्वीदृशार्थे किं मानमित्याह—प्रागुक्तनिषेधानुरोधादिति । "चक्राङ्किततनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः" इत्यादिदोषोक्तिसूचितनिषेधानुरोधादित्यर्थः ।

रूढेर्योगापहारकत्वादिति । वैष्णवपरिकल्पितकोशसिद्धरूढिशक्त्या पावित्र्यार्थकत्वस्य बाधो भविष्यतीति भावः । ततश्च चक्रधारणपरतयैवायं मन्त्रो व्याख्यायत इति शङ्कितुराशयः । कल्पितेऽपि कोशे कोशत्वमभ्युपेत्य समाधत्ते—सति बाधक इति । गौरवादिरूपबाधके सति कोशस्य लक्षणादि-

**शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" (अ० को० १।५।१७) इति कोशेन नीलादिपदस्य रूपवाचकत्वेऽपि समानविभक्तिक-पदस्थले भेदसंसर्गबोधासंभवेन रूपवति शक्त्यङ्गीकारे गौरवेण च निरूढलक्षणैवाङ्गीकृता। रूढेर्योगापहारकत्वमपि रूढ्यर्था-बाधस्थल एव। अन्यथा पङ्कजमानयेत्यादौ पद्मबाधेऽपि योगार्थकुमुदबोधो न स्यात्। प्रकृते तूक्तदिशा चक्रार्थकत्वं बाधितमेवेति। एतेन तप्तं चक्रं द्विभुजे धार्यमिति विधित एव चक्रधारणसिद्धिरित्यप्यपास्तम्, पठ्यमानशाखायामनूचानेन पाठस्यादर्शनात् तस्य श्रुतित्व एव विवादात्। यदि च विप्र-कीर्णशाखापाठादिकमभ्युपेत्य तथात्वमङ्गीकरोषि, तथापि न तेन तत्सिद्धिः, प्रागुक्तविकल्पपराहतत्वात्, निषेधशास्त्रानुरो-धाच्च। सर्वं वाक्यमिति न्यायेन भुजद्वयोद्देशेन चक्रधारण-**

---

ग्राहकत्वमङ्गीक्रियत इति भावः। लक्षणैवाङ्गीकृतेति। "गुणिलिङ्गास्तु तद्वति" (१।५।१७) इत्यमरकोशस्यात्यन्तप्रामाणिकस्यापि गौरवदोषेण शुक्लादिपदानां गुणिनि लक्षणाग्राहकत्वमेवोपगम्यते। कोशपुस्तकेष्वनुप-लभ्यमानतया कोशवाक्यत्वमेव यस्मिन् सन्दिग्धं तद्बलात् चक्रधारणनिषेध-वाक्यानां विरोधिनां पुरस्तात् कथं शक्तिस्तत्रेष्यत इति तात्पर्यम्।

रूढ्यर्थाबाधेति। तद्बाधे तु केवलयोगार्थस्यापि बोधो भवति। अत एव पङ्कजपदात् पद्मबाधे कुमुदबोधोऽपि भवतीत्याशयः। इदं रूढेर्योगापहारक-त्वादित्यक्षरखण्डनावेशमात्रेणोच्यते। वस्तुतस्त्वनुपयुक्तं स्वविरुद्धं च, प्रकृते चक्रत्वपावित्र्ययोरेकत्राबाधितत्वेनोभयोर्विशेषणभावापन्नयोर्बोधः कस्मान्नेति शङ्काया उत्थापकत्वात्। अत्रोदाहरणमपेक्षितम्। उक्तदिशेति। चक्रधारण-निषेधानुसन्धानेनेत्यर्थः। अनूचानेन साङ्गवेदाध्यायिना।

विकल्पपराहतत्वान्निषेधशास्त्रानुरोधाच्चेति। युक्तिविरोधात्, प्रत्यक्ष-वाक्यविरोधाच्च उच्छिन्नशाखास्वप्युक्तविधिवाक्यसत्त्वसम्भावना निरस्ता भवति। अनुपलभ्यमानशाखासु प्रामाणिकस्मृतिषु चानुपलम्भेनाविगीत-शिष्टाचारपरिग्रहाभावविशिष्टेन तादृशविधेरुच्छिन्नशाखावृत्तित्वाभावानु-मितौ विपक्षे निषिद्धत्वानुपपत्तिरूपो बाधकस्तर्कोऽस्तीति भावः। सर्वं वाक्यं

रूपविधाने शङ्खधारणासिद्धया—"दक्षिणे तु भुजे विप्रो बिभ्रियाद् वै सुदर्शनम्। सव्ये तु शङ्खं बिभ्रियादिति ब्रह्म-विदो विदुः ॥" इति वचनविरोध आचारविरोधश्चेत्यल-मसदावेशेन।

गुरुचरणास्तु ब्रह्मणस्पत इत्यनेन—"विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वम्" (श्वे० उ० ३।४) "यो ब्रह्माणं विदधाति पूर्वम्" (श्वे० उ० ६।१८) इत्यादि-श्रुतिभिर्हिरण्यगर्भजनयितृत्वेन प्रसिद्धः परमशिवोऽभिधीयते। पवित्रपदं लिङ्गार्थकम्, "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" (तै० आ० १०।१६।१) इत्यत्र लिङ्गपदसामाना-धिकरण्यात्। लिङ्गपदसमानाधिकृतपवित्रशब्दस्य कथं लिङ्गार्थकत्वमिति चेन्न, "वज्रं यथा मक्षिकयाऽवकीर्णम्" इति रामायणश्लोकव्याख्याने—"वज्रो वा आज्यम्" इति

---

सावधारणमिति महाभाष्यकारदर्शितन्यायेन तप्तं चक्रं द्विभुजे धार्यमिति विधावपि चक्रमेव द्विभुज एव इत्याद्याकारलाभात्। "दक्षिणे तु भुजे विप्रो बिभृयाद् वै सुदर्शनम्। सव्ये शङ्खं च बिभृयादिति ब्रह्मविदो विदुः ॥" इति भवन्मतसिद्धवचनेनैव तद्विधिवाक्यं विरुद्धं भवतीति भावः।

परमशिवोऽभिधीयत इति। ब्रह्मणो हिरण्यगर्भस्य जनयितृत्वात् पालकत्वाच्चेति भावः। सामानाधिकरण्यादिति। वज्रो वा आज्यमिति

इस व्याख्या के ऊपर वीरशैव मताचार्य अनेक प्रकार की निस्सारता का ज्ञापन करते हुए तप्तलिंग और तप्तचक्र धारण श्रुतिसम्मत नहीं है, ऐसा प्रमाण दिखला कर इस मन्त्र के सोम प्रकरण में कहे जाने से उसका लिंगधारणपरक अर्थ करना ही न्यायसंगत है, ऐसा बता कर शिवोपासना में परम भक्ति को दिखाते हैं। उनका कहना है कि भगवान् शिव चतुर्मुख ब्रह्मा की सृष्टि करके, उनके लिये चारों वेदों का उपदेश करके, प्रपंच की सर्जना में उनको नियुक्त करते हैं। वे 'ब्रह्मणस्पते' इस पद की परशिवपरक व्याख्या करके 'पवित्रं' इस पद का शिवलिंगपरक अर्थ निर्धारित करते हैं। इसके अतिरिक्त "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" इस मन्त्र में रहने वाले पवित्र पद के पास लिंग

श्रुतावाज्यपदसामानाधिकरण्येन वज्रपदस्य संस्कृताज्यपरत्व-मिति महेश्वरतीर्थादिभिरङ्गीकृतत्वात् । न च प्रकृते पवित्र-पदस्य मन्त्रपदसामानाधिकरण्येऽपि न लिङ्गपदसामानाधिक-रण्यमिति वाच्यम्, मननात् त्रायत इति व्युत्पत्त्या मन्त्रपद-स्यापि लिङ्गार्थकत्वात् । "वाच्यवाचकरूपेण द्विधा मन्त्रः प्रकीर्तितः । वाचको वर्णरूपः स्याद्वाच्यश्च परमः शिवः ।।" इति व्यासनिरुक्तेश्च । तथा च हे ब्रह्मणस्पते परमशिव, ते तव, पवित्रं लिङ्गम्, विततम् इष्टादिभेदेनानेकविधत्वाद् विस्तृतम्, प्रभुः अखण्डजगदण्डनियामकस्त्वं गात्राणि भक्तशरीराणि विश्वतः समन्तात् पर्येषि । "सर्वाङ्गेषु च सर्वत्र सर्वदा सर्वतो-मुखम् । लिङ्गं गुरूपदेशेन सुप्रतिष्ठितमात्मनि ।।" (अ० सू० ६।२ ) इत्यारभ्य "एकमेव परं लिङ्गमङ्गेऽस्मिन् सुप्रतिष्ठि-तम् । सर्वतोमुखमाभाति नामरूपक्रियात्मना ।। इष्टलिङ्गं तु

---

श्रुतेर्वज्रशब्दस्याज्यार्थकत्वात् पाणिमन्त्रं पवित्रमिति सामानाधिकरण्यात् पद के होने से जैसे "वज्रो वा आज्यम्" इस श्रुति के आज्य ( घी ) पद के पास रहनेवाले वज्र पद का मीमांसक संस्कृत आज्यपरक अर्थ करते हैं, वैसे ही यह पवित्र पद लिंग को ही बता रहा है, ऐसा निर्णय लिया गया है । "पाणिमन्त्रं" इस मन्त्र के पद भी "मननात् पूजनात् त्रायत इति मन्त्रः" इस व्युत्पत्ति से और "वाच्यवाचकरूपेण द्विधा मन्त्रः प्रकीर्तितः" व्यास की इस उक्ति से भी शिवलिंगपरक है, ऐसा कहने में कोई सन्देह नहीं है । इसलिए "पवित्रं ते" यह पवित्र शब्द शिवलिंगपरक है, ऐसा निर्णय हो जाता है । "प्रभुर्गात्राणि पर्येषि" इस आगे के मन्त्र से दीक्षा लिये हुए शिव-भक्तों के सभी अंगों में लिंग का संबन्ध रहना चाहिये यह अभिप्राय सिद्ध हो जाता है । इसी अभिप्राय के समर्थक और भी वाक्य यहाँ उदाहृत हैं ।

पर शिव अपने में अविनाभाव संबन्ध से विशिष्ट विमर्श शक्ति के स्फुरण से खुद ही नाम, रूप, क्रिया के रूप में अनन्ततया अभिव्यक्त होकर, भक्तों के शरीरों में इष्ट, प्राण और भाव रूप से विराजमान है । इनमें से विराट् तत्त्व नामक इष्ट-लिंग विश्व नाम से प्रसिद्ध त्यागांग में, हिरण्यगर्भ तत्त्व नामक प्राणलिंग तैजस

बाह्याङ्गे प्राणलिङ्गं तथान्तरे। भावलिङ्गं तथैवास्ति आत्माङ्गे सुप्रतिष्ठितम् ।। हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् । त्वगङ्गे चरलिङ्गं च दृगङ्गे शिवलिङ्गकम् ।। जिह्वाङ्गे गुरुलिङ्गं स्यान्नासिकाङ्गे तथैव च । आचार-लिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ।। यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् । तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।।" ( अ० सू० ६।४-८ ) इति वातुलागमोत्तर-

---

पवित्रशब्दस्य लिङ्गार्थकत्वं भविष्यतीत्याशयः। वातुलागमोत्तरेति। प्राहु-

नामक भोगांग(सूक्ष्म शरीर) में और ईश्वरतत्त्व नामक भावलिंग प्राज्ञ नामक योगांग में निवास करता है। इनमें से भावलिंग को महालिंग और प्रसादलिंग के नाम से, प्राणलिंग को जंगम और शिवलिंग नाम से, इष्टलिंग को गुरुलिंग और आचारलिंग नाम से, ( दो दो भेद से ) पुकारा जाता है। इनमें से महालिंग हृदयस्थान का, प्रसादलिंग श्रोत्रेन्द्रिय का, जंगमलिंग त्वगिन्द्रिय का, शिवलिंग नेत्रेन्द्रिय का, गुरुलिंग रसनेन्द्रिय का, आचारलिंग घ्राणेन्द्रिय का आश्रय लेकर उन उन बिषयों का अनुभव करते हुए सुख से परिवर्तित होता रहता है। उनमें से योगांगस्थल ऐक्यस्थल और शरणस्थल नाम से, भोगांगस्थल प्राणलिंगिस्थल और प्रसादस्थल नाम से और त्यागांगस्थल माहेश्वरस्थल और भक्तस्थल के नाम से विभक्त हुए हैं। इस प्रकार परब्रह्म अपने पूज्यपूजक लीलावैभव से शिवतत्त्व और जीवतत्त्व नामक दो प्रकार का है। शिवतत्त्व को लिंगस्थल और जीवतत्त्व को अंगस्थल कहा जाता है। उपास्यरूप लिंगस्थल छः प्रकार का है और उपासकात्मक अंगस्थल भी छः प्रकार का है। ऊपर बताये गये लिंगों में महालिंग ऐक्यस्थल में चिच्छक्ति, शान्त्यतीतोत्तर कला और समरस भक्ति को प्राप्त होकर मन रूपी इन्द्रिय के रूप में परिणत होकर गन्ध, रस, रूप, स्पर्श और शब्द नामक विषयों के ग्रहण करने का साधन बन गया है। प्रसादलिंग शरण-स्थल में पराशक्ति, शान्त्यतीत कला और आनन्द भक्ति को प्राप्त करके श्रोत्रेन्द्रिय होकर शब्द ग्रहण का कारण बन गया है। जंगमलिंग प्राणलिंगिस्थल पर आदि-शक्ति, शान्ति कला और अनुभव भक्ति को प्राप्त करके त्वगिन्द्रिय होकर स्पर्श ग्रहण का साधन बन गया है। शिवलिंग प्रसादिस्थल पर इच्छा शक्ति विद्या कला और अवधान भक्ति को प्राप्त करके नेत्रेन्द्रिय होकर रूप ग्रहण का साधन बन गया

**भागेऽनुभवसूत्रस्थितवचनरीत्या समस्तभक्ताङ्गान्यघटितघटना-पटीयांस्त्वमेव व्याप्नोषीत्यर्थ इति प्राहुः ।**

**अन्ये तु पवित्रं ते विततमित्यत्र विततशब्दस्तनुशब्दवत् "तनु विस्तारे" ( १४६४ तना० ) इति धातुनिष्पन्नत्वेन शरीरार्थकः, ब्रह्मपदं लिङ्गार्थकम् । तथा च हे ब्रह्मणस्पते**

---

रिति । पूर्वस्मिन् कल्पे ब्रह्मणस्पते इत्यस्य लिङ्गशरीराधिष्ठित इत्यर्थः । अस्मिन् व्याख्याने च चतुर्मुखजनक इत्यर्थः ।

अन्ये त्विति । अस्मिन् मते विततपदस्य शरीरार्थकत्वमुपपादयति—तनु विस्तार इत्यादिना ।

है । गुरुलिंग महेशस्थल पर ज्ञान शक्ति, प्रतिष्ठा कला और निष्ठा भक्ति को प्राप्त करके रसनेन्द्रिय होकर रस ग्रहण का साधन हो गया है । आचारलिंग भक्तस्थल पर क्रिया शक्ति निवृत्ति कला और श्रद्धा भक्ति को प्राप्त करके घ्राणेन्द्रिय होकर गन्ध ग्रहण का साधन हो गया है ।

इसके अतिरिक्त भूख, प्यास, शोक, मोह, जरा (बुढ़ापा), मरण नामक ऊर्मिषट्क से और जायते, अस्ति, वर्धते, परिणमते, अपक्षीयते, म्रियते—इन षड्भाव विकारों से अलग होकर, विकल्परूप भेदभाव से शून्य होकर महालिंग में जो एकाकार हो जाते हैं, वे ऐक्यस्थली कहे जाते हैं । लिंग में पतित्व भावना और अपने में सतीत्व भावना करके सती के लिए सब कुछ पति ही है, ऐसी भावना से स्रक्, चन्दन, वनिता आदि प्रापंचिक सुखों को तिलांजलि देकर निरन्तर शिवानन्द से विशिष्ट होकर रहनेवाले ही शरणस्थली कहे जाते हैं । लिंग में प्राण को और प्राण में लिंग को लीन करके सुख और दुःख से विमुख रहनेवाले ही प्राणलिंगी हैं । लिंगार्पित पदार्थों को ही जीविकोपार्जन के निमित्त उपयोग में लेते हुए लिंग में मन को लय करके लिंग को समर्पित न किये हुए पदार्थों को छाड़ देनेवाले ही प्रसादस्थली कहे जाते हैं । परस्त्री, परद्रव्यों को त्याग करते हुए भावशुद्धि के साथ लिंग में निष्ठा रखनेवाले ही महेश्वरस्थली कहे जाते हैं । सदाचारी होकर भगवान् शिव में अनन्य भक्ति से युक्त होकर गुरु, लिंग, जंगमों में समत्व बुद्धिवाले, भस्म, रुद्राक्ष आदि प्रतीकों में तथा शिवशरणों में भक्ति रखने वाले भक्तस्थली कहे जाते हैं । इस प्रकार षडंगों में षड्लिंगों को आराधना करनेवाले ही षट्स्थलब्रह्मी कहे जाते हैं ।

लिङ्गाधिष्ठानक परमशिव, ते विततं लिङ्गरूपशरीरं पवित्रं शुच्यशुचिकालेऽपि धारणयोग्यम्। प्रभुः तादृशलिङ्गशरीरको भुक्तिमुक्तिफलप्रदाता भक्तशरीराणि पर्येषि व्याप्नोषि। लिङ्ग-शरीरावच्छिन्नः शिवो भक्तगात्रेषु धार्य इत्यक्षरार्थ इत्याहुः।

गुरुमते त्वियान् विशेषः—"उद्देश्यवचनं पूर्वं विधेयश्च ततः परम्" इति मिश्रकारिकानुरोधेन पवित्रं ते विततमित्यत्र पवित्रपदस्य लिङ्गार्थकत्वे विततपदवाच्यविस्तृतत्वस्य विधेय-त्वेनोद्देश्यविधेयवाचकशब्दयोः पौर्वापर्यं सिद्ध्यति। वितत-शब्दस्य लिङ्गार्थकत्वे पावित्र्यस्य विधेयत्वे तु वैपरीत्यमिति। उक्तार्थानुरोधेनैवास्य मन्त्रस्योपबृंहणमप्यस्ति लिङ्गपुराणे—"कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्। मानवः शिवयोगेन शिवो भवति निश्चयः।। ब्रह्मविष्ण्वादयो देवा मुनयो गौतमा-दयः। धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः।।" इत्यु-पक्रम्य—"ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः। पवित्रं तद्धि विख्यातं तत्सम्पर्कात् तनुः शुचिः। ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते। तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमना-मयम्।। अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः। दीक्षया रहितः साक्षान्नाश्नुते लिङ्गमुत्तमम्।। यः करोति तपः पूर्वं स तप्ततनुरुच्यते। परिपक्वो विमोक्षाय सोऽश्नुते लिङ्गधारणम्।।

---

उद्देश्यवचनं पूर्वमिति। पर्वतो वह्निमानित्यत्रेवेति भावः। मिश्रकारि-केति मण्डन मिश्रकारिकेत्यर्थः। ब्रह्मेति लिङ्गमाख्यातमिति। इदं प्रथम-

यहाँ पर विशेष अभिप्राय से प्रयुक्त "गात्राणि पर्येषि विश्वतः" इस वाक्य के आधार पर षडंगों में षड्लिंगों का सम्बन्ध सिद्ध हो जाता है। यह षट्स्थल सिद्धान्त बहुत विस्तृत एवं दुरूह होने पर भी इस सन्दर्भ में संक्षेप से दिखाया गया है। इस प्रकार ऋग्वेद का "पवित्रं ते" यह मन्त्र लिंगधारणपरक अर्थ को ही बोध करा रहा है। इस मन्त्र के अर्थं के समर्थक वाक्य पुराणों में भी मिलते हैं।

न करोति तपः पूर्वं सोऽतप्ततनुरुच्यते । अपक्वोऽयं विमोक्षाय नाश्नुते लिङ्गधारणम् ।।" इति । अत्र ब्रह्मेति लिङ्गमाख्यातमिति, तद्धि विख्यातमिति, धार्यं शैवमिति चोक्तार्थोपोद्बलकमिति स्पष्टम् ।

किञ्च, "इति सम्बोधितः शिष्यो गुरुणा शास्त्रवेदिना । धारयेच्छाङ्करं लिङ्गं शरीरे प्राणयोगतः ।। लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम् । आदृतं मुनिभिः सर्वैरागमार्थविशारदैः ।।" (सि.शि.६।२७-२८),"इष्टलिङ्गमिदं साक्षादरिष्टपरिहारकम्। धारयेदवधानेन शरीरे सर्वदा बुधः ।।" (सि० शि० ६।५०), "धारयेदवधानेन लिङ्गं तद्गुरुणार्पितम् । प्रमादात् पतिते लिङ्गे प्राणानपि परित्यजेत् ।।" इत्यादिशङ्करसंहितासिद्धान्तशिखामण्यादिवचनान्युक्तार्थोपोद्बलकान्यनुसन्धेयानीति ।

ऋग्वेदेऽपि न केवलं पवित्रं त इति मन्त्रेणैव तत्सिद्धिः, किन्तु—"अयं मे हस्तः" (ऋ० १०।६०।१२) इति मन्त्रान्तरेणापि तदेव सिद्ध्यति ।

"अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ।।" ( ऋ० १०।६०।१२ ), "अयं

---

व्याख्यानानुकूलम् । ऋग्वेदस्यैव मन्त्रान्तरं प्रमाणयति—अयं मे हस्त इत्यादिना । अर्थस्तु—अयं भगवान् लिङ्गरूपसदाशिवः, मे हस्तः, मम हस्तगत

इस प्रकार इस मन्त्र के पवित्रम्, ब्रह्मणस्पते, अतप्ततनुः, आमः—इत्यादि पदों को लेकर लिंगधारण का स्पष्टतया निरूपण किये जाने से इस मन्त्र का 'पवित्रम्' यह पूर्वार्ध इष्टलिंगधारण का और 'अतप्ततनुः' यह उत्तरार्ध लिंगधारण रूप शिवदीक्षा संस्कार का बोध करा रहा है, ऐसा समझ लेना चाहिये ।

इसके बाद ऋग्वेदीय दूसरे मन्त्र को लेकर लिंगधारणपरक अर्थ का प्रतिपादन किया जाता है ।

अवयवार्थ— अयं भगवान् = लिंगरूप यह सदाशिव, मे हस्तः = मेरे हाथ पर विराजमान हैं । अयं = यही शिवलिंग, मे = मुझे, भगवत्तरः = सर्वोत्कृष्ट ऐश्वर्य

**माता अयं पिता अयं जीवातुरागमात् । इदं तव प्रसर्पणं सुबन्धवेहि निरीहि ।।" ( ऋ० १०।६०।७ ) इत्यत्र भगवच्छब्देन परमशिव एवोच्यते, "अथैनं भगवन्तं रुद्रं कुमारः पप्रच्छ", "अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ" ( काला० उ० २ ) इत्यादिश्रुतिषु, "इति संस्तूयमानस्तु भगवान् वृषभध्वजः" इति हरिवंशादिषु च शिवे तत्पदप्रयोगात् । एवं चायं भगवान् लिङ्गरूपः शिवः, मे हस्तः हस्तगतः, मे मत्सम्बन्धी, अयं शिवो भगवत्तर इत्यर्थः ।**

---

इत्यर्थः । अयमेव सदाशिवो मे भगवत्तरः मम सर्वैश्वर्यवत्तरः । अयं मे विश्वभेषजः विश्वेषां रोगाणां निवर्तकौषधस्वरूपः । अयं शिवाभिमर्शनः सर्वेषां कल्याणानां प्रापकः । अयं माता मातृवद् वात्सल्यवान् । अयं पिता पितृवद्रक्षकः । अयं जीवातुः जीवनसाधनभूतः । आगमात् शास्त्रप्रामाण्यात् । इदं तव प्रसर्पणं सुबन्धवेहि । हे सुबन्धो ! निरुपाधिकविश्वसुहृत् ! एहि आगच्छ । इदं तव प्रसर्पणम् इदं मद्धस्तगतं लिङ्गं तव प्रसर्पणं विहारस्थानम् । निरीहीति निर्गमचेष्टारहितः सन् अस्मिन् शिवलिङ्गे तिष्ठेत्यर्थः । अत्र कतिपयपदानामर्थान्तरं स्वयमग्रे मूलकारो वक्ष्यति । अत्र भगवत्पदेन सदाशिव एवोच्यते—"भगवन्तं रुद्रं कुमारः पप्रच्छ", "अथ कालाग्नि-

को देनेवाला है । अयं = मेरे हाथ पर विराजमान यह शिवलिंग, मे = मेरे, विश्वभेषजः = सम्पूर्ण भवरोगों का नाश करने वाला महावैद्य है । अयं = मेरे हाथ पर विराजमान यह शिवलिंग, शिवाभिमर्शनः = समस्त कल्याणों को करने वाला है । अयं = मेरे हाथ में रहनेवाला यह लिंग, माता = माँ की तरह स्नेह वाला है । पिता = पिता की तरह रक्षा करने वाला है । अयं = यह शिवलिंग, जीवातुः = संजीवनी की तरह (जैसे संजीवनी नामक औषधि प्राणप्रद है, वैसा) प्राणरक्षक है । आगमात् = शास्त्र के प्रमाण से, हे सुबन्धो = हे निर्व्याज (बिना हेतु = कारण व लाभ के) बन्धु ! एहि = यहाँ पर पधारो । इदं = मेरे हाथ में रहनेवाला यह शिवलिंग, तव = आप के लिये, प्रसर्पणं = विहार स्थल है, निरीहि = इधर-उधर न जाकर इस इष्टलिंग पर निरन्तर निवास करो । इस तरह के अन्य मन्त्र भी यहाँ उद्धृत हैं । पितृमेधप्रकरण, श्वेताश्वतर, अथर्वशिरस्,

**ननु हस्तगतो भगवानिति वक्तव्ये हस्त इत्युक्तिः कथमिति चेन्न, "आदित्यो भगवान् सूर्यो नीलग्रीवस्त्रिलोचनः। अधीयते सहस्रांशुः सामगाध्वर्युहोतृभिः ।।" इत्यादित्यपुराणवचने, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यारभ्य "अम्बिकापतय उमापतये पशुपतये नमो नमः" इत्यन्तेन तैत्तिरीयवचनेन, "सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्", "मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम्**

---

रुद्रं भगवन्तं सनत्कुमारः पप्रच्छ" (काला० उ० २) इत्यादिवेदवाक्येषु, "भगवान् वृषभध्वजः" इति हरिवंशादिषु च सदाशिव एव भगवच्छब्दस्य प्रयोगात् ।

हस्तगत इत्यनुक्त्वा अयं मे हस्त इति बाधितार्थकं कथमुच्यते ? इत्याशङ्क्य समाधत्ते—आदित्यो भगवान् सूर्यो नीलग्रीवस्त्रिलोचन इत्यादिना । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति, "य आदित्ये तिष्ठन्नादित्यमन्तरो यमयति यमादित्यो न वेद यस्यादित्यः शरीरम्" (बृ० उ० ३।७।९) इत्यन्तर्यामिब्राह्मणमप्यत्रानुसन्धेयम् । एवम्—"सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्" इत्यनेनापि मण्डलादिभिन्नत्वं

शतरुद्रीय आदि अनन्त श्रुतियाँ 'भगवान्' पद को केवल शिव में विनियुक्त करती हैं, अतः "अयं मे हस्तो भगवान्" इस मन्त्र के 'भगवान्' पद का शिवलिंग रूप अर्थ निर्विवाद हो जाता है ।

**शंका**—लेकिन इस मन्त्र में "अयं मे हस्तः" ऐसा प्रथमान्त पद है, न कि "हस्तगतः" ऐसा पद । इसलिये हस्त पद का हाथ इतना ही अर्थ होगा, न कि हाथ में धारण किया हुआ, ऐसा अर्थ । इसलिये भगवत्पदवाच्य शिवलिंग मेरे हाथ में धारण किया हुआ है, ऐसे अर्थ का निश्चय कैसे किया जाय ?

**समाधान**—ऐसो बात नहीं, क्योंकि—"हस्तो भगवान्" इस प्रकार हस्त पद भगवत्पद के पास होने से हाथ में धारण किया हुआ शिवलिंग, ऐसा निश्चय कर लेना चाहिये । आदित्यपुराण में स्पष्ट कहा गया है—भगवान् = सर्वव्यापक शिवलिंग, आदित्यः = सूर्यमण्डल में है । नीलग्रीवः = काली गर्दन से विशिष्ट है । त्रिलोचनः = सूर्य, चन्द्र और अग्नि नामक तीन नेत्रों से विशिष्ट है ।

**इत्यादिवचनैश्चादित्यगतत्वेन प्रतिपादिते परमशिवे शिवादित्ययोरविभाज्यसम्बन्धद्योतनायादित्यगतस्त्रिलोचन इत्यनुक्त्वाऽऽदित्यस्त्रिलोचन इत्युक्तिवदयं मे हस्तो भगवानित्यत्रापि हस्तशिवलिङ्गयोरविभाज्यसम्बन्धसूचनाय हस्तगत इत्यनुक्त्वा हस्तो भगवानित्युक्तमिति वक्तुं शक्यत्वात् ।**

---

मण्डलान्तर्गतत्वं साम्बशिवस्य प्रतीयते, तथापि "आदित्यस्त्रिलोचनः" इत्यभेदोपचारो दृश्यते, एवमेवायं मे हस्तो भगवानित्यत्रापि द्रष्टव्यमित्याह—आदित्यस्त्रिलोचन इत्युक्तिवदिति। त्रिलोचनस्यादित्यमण्डलान्तर्गतत्वेऽप्यादित्याभेदोपचारवत् शिवलिङ्गस्य हस्ते पूज्यरूपेण वर्तमानत्वेऽप्ययं मे हस्त इत्यभेदोपचार इति भावः। उपचारफलं तु हस्तशिवलिङ्गयोरविभाज्यसम्बन्धबोधनमेव। सम्बन्धेऽविभाज्यत्वं च जीवनदशावच्छिन्नभक्तशरीरवृत्त्यभावाप्रतियोगित्वम्। तेन च लिङ्गधारणस्य सर्वदा कर्तव्यत्वं

सूर्यः = सूर्य नाम वाला है। यहाँ पर भगवान्, नीलग्रीवः, त्रिलोचनः—इन पदों के पास रहनेवाले आदित्य और सूर्य पद का सूर्यमण्डल में रहनेवाले सूर्य की अपेक्षा भिन्न शिवलिंग को बताने के लिए "आदित्यो भगवान्" इस प्रकार का अभेद बताया गया है, वैसे ही हाथ पर निरन्तर पूजा करनी चाहिये, इस अर्थ को बताने के निमित्त "हस्तो भगवान्" ऐसा औपचारिक (गौण) अभेद दिखाने से हाथ और हाथ पर रखकर पूजा किये जाने वाले शिवलिंग, इन दोनों के नित्य सम्बन्ध का संकेत मिल जाता है। और "जो पुरुष सुवर्ण (सोने के) वर्ण की आभा से युक्त होकर निरन्तर सूर्यमण्डल में प्रकाशित हो रहा है, उसी उमा रूपी शक्ति से विशिष्ट परशिव को नमस्कार है"। इसी प्रकार के अन्य मन्त्रों और समर्थक वाक्यों के आधार पर परशिव ब्रह्मलिंग सूर्यमण्डल में प्रकाशित होने पर भी उस सूर्यमण्डल से भिन्न है, ऐसा स्पष्टतया दीखने से "आदित्यो भगवान्" इत्यादि वाक्यों से सूर्य ही परशिव है, ऐसा सूर्य और परशिव इन दोनों में सामान्यतया दीखने वाला अभेद सूर्य और परमेश्वर के नित्य सम्बन्ध को दिखाने के लिये बताया गया है, न कि सूर्य ही परशिव है, ऐसा निर्णय करने के लिये। उसी प्रकार "हस्तो भगवान्" इस स्थान पर भी हाथ और हाथ पर रखकर पूजा किये जाने वाले शिवलिंग का आधाराधेयभाव सम्बन्ध होने से सहजतया भेद होने पर भी इस इष्टलिंग के आधारस्वरूप हस्त, कण्ठ आदि अंगों को छोड़कर वह

**एवं चोभयोरविभाज्यसम्बन्धानुपपत्त्या, "संस्कृत्य गुरुणा दत्तं षडध्वन्यासपूर्वकम् । वामहस्तगतं लिङ्गं सावधानेन पूजयेत् ।। धारयेद् यस्तु हस्तादौ लिङ्गाकारं शिवं सदा । तस्य हस्तस्थितं विद्धि मत्पदं संपदाम्पदम् ।।"**

---

सिद्धयति । न च धृतेऽपि लिङ्गेऽवयवान्तरावच्छेदेन वृत्त्यभावप्रतियोगित्वस्य सत्त्वे न बाध इति वाच्यम्, अभावे प्रतियोगिव्यधिकरणत्वस्य निवेशनीयत्वात् । न चैवं धारणपूर्वकपरित्यागेऽपि तादृशाप्रतियोगित्वाबाध इति वाच्यम्, स्वप्रतियोगिनिष्ठाधेयतावद्भिन्नत्वरूपवैयधिकरण्यस्य प्रवेशनीयत्वात् । आधेयतावैशिष्ट्यं च स्वावच्छेदककालावच्छिन्नत्वस्वनिरूपकशरीरनिरूपितत्वोभयसम्बन्धेन । एतदभिप्रायेण वक्ष्यति । षडध्वन्यासपूर्वकमिति । षडध्वन्यासो दीक्षाविधौ द्रष्टव्यः । अत्रैवेशावास्योपनिषद्वाक्यं प्रमाणत्वे-

लिंग जब तक देह रहता है, तब तक अलग नहीं होना चाहिये, वैसा नित्यसम्बन्ध बता रहा है । 'अयं मे भगवान्" इस मन्त्र में शिव अपने हाथ पर है, इस स्पष्ट अर्थ को बताने वाले "हस्तगतो भगवान्" वाक्य का प्रयोग न कर, "हस्तो भगवान्" ( मेरा हाथ ही शिवलिंग है ) ऐसा लाक्षणिक ( औपचारिक ) अभेद दिखाया गया है । इस प्रकार के अभेदार्थक "हस्तो भगवान्" ऐसे प्रथमान्त पद को इस श्रुति में न दिखलाने पर हस्त, कण्ठ आदि अंगों में धारण किये गये शिवलिंग और दीक्षाबद्ध देह का जो अविभाज्य सम्बन्ध है, उसका लोप हो जाता । वीरशैव सिद्धान्त में मुक्तिदायक और शिवस्वरूप इष्टलिंग को शिष्य गुरु से दीक्षापूर्वक जब से ग्रहण करता है, तब से जब तक यह स्थूल देह रहे, तब तक इष्टलिंग देह से अलग नहीं हो सकता, देह और शिवलिंग का वियोग होने पर महत्तर दोष बताया गया है । जैसा कि वातुलागम में कहा गया है—

श्रीगुरु शिष्य की योग्यता की परीक्षा करके उपयुक्त समय पर षडध्वन्यासपूर्वक शिवदीक्षा से परिशुद्ध करके शिष्य के वामहस्त नामक पीठ पर शिवकला से विशिष्ट शिवलिंग को 'सर्वलिङ्गम्' इस मन्त्र का उच्चारण करते हुए स्थापित करता है और कहता है कि इस शिवलिंग की सावधानी से पूजा करना और 'यज्ञोपवीतम्' इस मन्त्र से शिर, कण्ठ, वक्षस्थल, उदर (पेट), हस्त आदि उत्तमांगों में से किसी एक पर धारण करना । गुरु की इस आज्ञा के अनुसार जो शिष्य लिंगधारण और लिंगपूजा में आसक्त होकर रहता है, उसके लिये लौकिक सुखपरम्पराओं की प्राप्ति तो होती ही है, साथ ही साथ देह की समाप्ति के बाद शिव में लय हो जाता है । प्रमाद से इस लिंग के देह से वियुक्त होने पर प्राण को

इति वातुलवीरागमाद्युपबृंहणादिवचनानुरोधेन च हस्तादौ धारणं लभ्यते । हस्तशिवलिङ्गसम्बन्धस्याविभाज्यत्वादेव—"धारयेदवधानेन लिङ्गं तद् गुरुणार्पितम् । प्रमादात् पतिते लिङ्गे प्राणानपि परित्यजेत् ।। पतिते प्राणलिङ्गे यः प्राणान् धत्ते नराधमः । स चाण्डाल इति ज्ञेयः शिवद्रोही न संशयः ।। हस्तसिंहासने लिङ्गमप्रमादेन धारयेत् । प्रमादात् पतिते लिङ्गे सह प्राणान् परित्यजेत् ।। लिङ्गपातिनमाचारनिन्दकं न हृदि स्मरेत् । भूमौ प्रतिष्ठितं लिङ्गं पुनर्नोत्पाट्यते यथा । देहे प्रतिष्ठितं लिङ्गमन्तेऽपि न विभज्यते ।।" इत्यादि लिङ्गाङ्गविभागे दोषविधायकशङ्करसंहितादिवचनान्यपि सङ्गतानि । तद्वचनानामपि शरीरविभक्तलिङ्गस्य पुनः संग्रहे स्वगृह्योक्तविधानेन वाऽन्तरप्रायश्चित्तमेव, असंग्रहे तु मरणान्तप्रायश्चित्तमित्यत्र तात्पर्यमिति द्रष्टव्यम् । अत एवोक्तमीशावास्योपनिषदि—"तेन त्यक्ते न भुञ्जीथा मा गृधः कस्यस्विद्धनम्"(ई. १) इति ।

---

नोपन्यस्यति—तेन त्यक्ते न भुञ्जीथा इति । तेन लिङ्गात्मना परमेश्वरेण त्यक्ते त्वच्छरीरेण विभागे जाते न भुञ्जीथा अन्यस्य धनं शिवलिङ्गरूपं मा गृधः न कामयस्वेत्यर्थः ।

भी छोड़ देने के लिये तैयार रहना चाहिये । कहने का अभिप्राय यह है कि भुक्ति-मुक्ति प्रदायक लिंग की अपने प्राण की तरह रक्षा करनी चाहिये । इस इष्टलिंग को खोकर जो शून्य हृदय हो जाता है, वह नरों में अधम है, चण्डाल के सदृश है, शिवद्रोही है और पतित है, ऐसा शिवागम बता रहे हैं । जिसने इष्टलिंग को छोड़ दिया है और जो आचार से भ्रष्ट हो गया है, उसका स्मरण न करना चाहिये । जमीन पर प्रतिष्ठित स्थावर लिंग को जैसे उखाड़ नहीं सकते, वैसे ही इस देहरूपी जमीन पर प्रतिष्ठित इष्टलिंग को भी उखाड़ना नहीं चाहिये ।

ईशावास्योपनिषद् कहती है – तेन = लिंगरूप परम शिव को, त्यक्ते = प्रमाद से छोड़ देने पर, न भुञ्जीथाः = खाना न खाकर, अर्थात् अनशन व्रत करते हुए

**तेन कारणेन त्यक्ते प्रमादादिना लिङ्गत्यागे सति पुनरसंग्रहे च सति न भुञ्जीथाः, परन्त्वनशनादिना शरीरमेव विसृजेत् । कस्यस्विद् अन्यदीयं धनं लिङ्गं मा गृधः न स्वीकुरुष्व । "धनं वै लिङ्गम्" इति कौषीतकी श्रुतिरिति ।**

**ननु—"नारायणोऽपि भगवान् देवकीतनयो हरिः । ततः स भगवान् जज्ञे ब्रह्मा लोकपितामहः ।। सनत्कुमारो भगवान्" इत्यादिषु देवर्षिसाधारण्येन प्रयुज्यमानस्य भगवच्छब्दस्य कथं शिवलिङ्गपरत्वम् ? इति चेन्न, "हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनाऽवद्यति" इत्यत्रावदानमात्रसाधारणस्यावद्यतीत्यस्य हस्तादिलिङ्गसाचिव्येन तत्तत्पुरोडाशावदानादिपरत्ववत् प्रकृतेऽपि देवतान्तराणां हस्तादिधारणाप्रसिद्ध्या हस्तगतत्व-**

---

देवर्षिसाधारण्येनेति । ततश्चायं मे हस्तो भगवानित्यादौ ब्रह्मसनत्कुमारादीनां भगवत्पदेन प्राप्तिरस्तीत्याशयः ।

तत्तत्पुरोडाशेति । अवद्यतीत्येकानुपूर्वीकपदश्रवणेऽपि हस्तस्रुवस्वधितिपदानां भिन्नार्थकानां समभिव्याहारबलाद्योग्यताबलेन हस्तेन पुरोडाशस्य, स्रुवेण घृतस्य, स्वधितिना मांसस्य पृथक् पृथगवदानं प्रतीयते, एवमिहापि

शरीर को छोड़ देना चाहिये । कस्यस्वित् = दूसरे के, धनं = 'धनं वै लिङ्गम्" इस कौषीतकी श्रुति के प्रमाण के अनुसार शिवलिंग को, मा गृधः = स्वीकार न करे ।

**शंका—**लेकिन यहाँ पर "नारायणोऽपि" इस प्रकार के अनन्त लौकिक प्रमाणों से भगवत्पद का नारायण में, चतुर्मुख ब्रह्मा में और सनत्कुमार आदि महर्षियों में प्रयोग मिलता है। इस तरह सर्वसाधारण में प्रयुक्त नारायण पद को हाथ पर लिये हुए शिवलिंग के अर्थ में कैसे प्रयुक्त किया जा सकता है ?

**समाधान—**ऐसा करने में कोई आपत्ति नहीं है, क्योंकि "हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनावद्यति" हाथ से अवदान करना चाहिये (समूह से अलग करके ले लेने का नाम अवदान है)। स्रुव माने कलछुल से ग्रहण करना चाहिये। स्वधिति से ग्रहण करना चाहिये। इस प्रकार के पूर्वमीमांसा वाक्यों में अवदान केवल साधारण स्वरूप अवद्यति, अवद्यति,

**लिङ्गेन भगवच्छब्दस्य शिवलिङ्गपरत्वावश्यम्भावात् । किञ्च, "अयं शिवाभिमर्शनः" ( ऋ० १०।६०।१२ ) इति वाक्यशेषेणायं मद्धस्तगतो भगवान् शिव इत्यभिमृश्यते परामृश्यत इति शिवाभिमर्शनः, शिवपदोपस्थाप्य इति यावत्, इत्यर्थकेन यवव्रीह्यधिकरणन्यायेन भगवत्पदस्य शिवलिङ्गपरत्वनिश्चयाच्च ।**

---

भगवच्छब्दस्य साधारण्येऽपि हस्तपदसान्निध्याद्धस्तधृतशिवलिङ्गपरत्वमिति समाधानग्रन्थाशयः। यवव्रीह्यधिकरणन्यायेनेति । "व्रीहिभिर्यवैर्वा यजेत" (आप० श्रौ० ६।३१।१३) इत्यत्र यवशब्दस्य म्लेच्छेषु प्रियङ्गौ, आर्येषु दीर्घशूके च प्रयोगदर्शनात् कस्यार्थस्य प्रकृते ग्रहणं कार्यमिति जिज्ञासाम्—"यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमानास्तिष्ठन्ति" ( श० ब्रा० ३।६।१।१० ) इति वाक्यशेषेण दीर्घशूकस्यैव ग्रहणं निर्णीयते ।

इस प्रकार के समान स्वरूप वाले पद के होने पर भी इन पदों के पास हस्त, स्रुव, स्वधिति पद होने से "हस्तेनावद्यति" इस वाक्य से हस्त से पुरोडाश का अवदान ( ग्रहण ), "स्रुवेणावद्यति" इस वाक्य से स्रुवा से घृत ( घी ) का अवदान और "स्वधितिनावद्यति" इस वाक्य से स्वधिति में माँस का अवदान करना चाहिये । इस प्रकार हस्त आदि साधनों से पुरोडाश आदि हविर्द्रव्यों को अलग अलग ग्रहण करने का जैसे विधान है, वैसे ही 'अयं मे' इस मन्त्र के भगवत्पद के अन्य देवताओं से संबद्ध साधारण पद के होने पर भी इस भगवत्पद के पास 'हस्त' ऐसा पद आने से इस प्रकार के हाथ में नारायण आदि अन्य देवताओं को धारण करने का व्यवहार व प्रमाण कहीं पर भी न दीखने से इस भगवत्पद का शिवलिंग ऐसा अर्थ निश्चित हो जाता है । लौकिक प्रयोग की अपेक्षा श्रौत प्रयोग के प्रबल होने से भगवत्पद के पुराण आदि लौकिक वाक्यों से महर्षियों में, शिवेतर देवताओं में प्रयुक्त होने पर भी अनन्त श्रुतियों में शिवपरक अर्थ में भगवत्पद का प्रयोग रहने से इस पद का शिवलिंग अर्थ ही प्रधान है, ऐसा समझ लेना चाहिये।

इससे इष्टलिंग को देह से कभी भी नहीं छोड़ना चाहिये, ऐसा तात्पर्य सिद्ध हो जाता है । इसलिये हाथ और हाथ पर रखे गये शिवलिंग का नित्य संबन्ध दिखलाने के लिये ही "अयं मे हस्तो भगवान्" इस मन्त्र का आविष्कार है। इस मन्त्र में "शिवाभिमर्शनः" ऐसा एक विशेष पद है । यहाँ पर हाथ में रहने

**एवं हस्तादौ लिङ्गधारणं विधाय तस्य लिङ्गस्य सृष्टयादिकर्तृत्वेनार्थवादः क्रियते। तत्रायं माता अयं पितेति सृष्टिकर्तृत्वमभिधीयते। अयं विश्वभेषज इत्यनेन विश्वस्य भवस्य भेषजः संसाररोगनाशक इत्यर्थकेन संहारकर्तृत्वं प्रतिपाद्यत इति।**

---

एवमिहाप्ययं मे शिवाभिमर्शन इति वाक्यशेषबलाद् भगवच्छब्देन शिव एव गृह्यत इति भावः।

संहारकर्तृत्वमिति। मध्ये मध्ये प्रारब्धोपस्थापितनानाविधदुःखात्मक-रोगशामकत्वेन पालनकर्तृत्वमपि भेषजत्वोक्त्या बोध्यते।

वाले भगवत्पदवाच्य परमेश्वर "शिव इत्यभिमृश्यत इति शिवाभिमर्शनः" अर्थात् शिव ऐसा विचार किया जाता है, इस प्रकार के विग्रह से "हस्तो भग-वान्" इस वाक्य का भगवत्पद सामान्य वचन है, ऐसा बताने पर भी परशिव-लिंगपरक ही निश्चय हो जाता है। इसके अतिरिक्त पूर्वमीमांसा में "व्रीहिभिर्यजेत", "यवैर्यजेत" अर्थात् जौ और धान से यज्ञ करे, इन वाक्यों में व्रीहि और यव को यज्ञ का साधन बताया गया है। आर्य लोग इसी यव शब्द का 'दीर्घशूक' (लम्बे बाल वाले) धान्य की जातिविशेष में प्रयोग करते हैं और म्लेच्छ लोग प्रियंगु में। इस प्रकार 'यव' शब्द के दो प्रकार के अर्थ हो जाने पर किस अर्थ का ग्रहण करना चाहिये, ऐसा सन्देह हो जाने पर "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोपतिष्ठन्ते" अर्थात् जिस काल में दूसरी सारी फसल मुरझा जाती है, लेकिन यह दीर्घशूक धान्य जौ तो हरा-भरा रहता है। इस प्रकार के वाक्य के बल से 'यव' शब्द से दीर्घशूक विशिष्ट धान्य को ग्रहण करना है, न कि प्रियंगु (साँवा) धान को, ऐसा नियम बनाया गया है। इसी को 'यवव्रीह्यधिकरणन्याय' कहते हैं।

इस न्याय के आधार पर "अयं मे हस्तो भगवान्" इस मन्त्र का भगवत्पद इन्द्र आदि देवताओं तथा नारद आदि महर्षियों के अर्थ में प्रयुक्त माना जा सकता है, किन्तु आगे के 'शिवाभिमर्शनः' इस वाक्यशेष के बल से उस भगवत्पद का अर्थ हाथ में रहनेवाला लिंगरूप शिव, ऐसा निश्चय हो जाता है। यह मन्त्र हस्त आदि स्थानों में लिंगधारण का विधान करने के बाद "अयं माता, अयं पिता" इस प्रकार से सृष्टिकर्तृत्व और "अयं विश्वभेषजः"

नन्वयं शिवाभिमर्शन इत्यत्रेदंशब्देन प्रागुक्तहस्तः परामृश्यते, शिवमभिमृशति चन्दनलेपनादिना स्पृशतीति शिवाभिमर्शनः, तथा च दारुपीठादौ बाणमरकतलिङ्गाद्यर्चनाकाले दक्षिणहस्तस्य चन्दनलेपपूजानिवेदनादिविनियुक्तस्यात्यन्ताभ्यर्हितस्यायं मे हस्तो भगवानित्यादिना भगवत्त्वमातृत्वपितृत्वादिनार्थवादः क्रियत इति नायं मन्त्रो हस्तादौ लिङ्गधारणविधायक इति चेन्मैवम्, हस्तस्याचेतनत्वेन तत्र भगवत्त्वमातृत्वपितृत्वादिसम्बन्धासम्भवेनोक्तरीत्या समवेतगुणसम्बन्धबोधकत्वे सम्भवत्यसमवेतगुणसम्बन्धबोधकत्वाङ्गीकारस्य जघन्यत्वात् ।

अत एव—"सोमः पवतेर्जनिता मतीनाम्" ( ऋ० ९।९६।५ ) इत्यादौ सोमलताया मन्त्रोक्तगुणसम्बन्धाभावेन

---

असमवेतगुणेति। आरोपितगुणेत्यर्थः।

इससे स्थितिसंहारकर्तृत्व का बोध कराता है, अतः इन मन्त्रों का 'हाथ पर धारण किया हुआ लिंग' यह अर्थ करना ही न्यायसंगत है।

**शंका**—ऐसा कहने पर विरोध दीख रहा है। जैसे कि— 'अयं शिवाभिमर्शनः" इस वाक्य के अयं = यह हाथ, शिवाभिमर्शनः = "शिवमभिमृशतीति शिवाभिमर्शनः" इस व्युत्पत्ति के अनुसार शिवलिंग को स्पर्श कर रहा है, ऐसा अर्थ होता है। इससे बाणलिंग ( जिसमें एक ही पत्थर से गौरीपीठ एवं लिंग का निर्माण किया गया हो ), मरकत ( एक रत्नविशेष ) लिंग, स्फटिक लिंग—इनमें से किसी एक लिंग को लकड़ी, चाँदी व सोने के पीठ पर रखकर जब पूजा की जाती है, उस समय पुजारी अपने हाथ से उस शिवलिंग को गन्ध आदि द्रव्य अथवा नैवेद्य (भोग) आदि का निवेदन करता है। इस प्रकार समर्पण करते समय इस हाथ की "अयं मे हस्तो भगवान्, अयं माता, अयं पिता" ऐसी स्तुति की जाती है। इसलिये इस मन्त्र का अर्थ स्थावरलिंगपरक ही है, न कि इष्टलिंगपरक। तब आप इस मन्त्र का अर्थ इष्टलिंगपरक कैसे कर सकते हैं ?

त्वेन प्रसिद्धशैवागमानामप्रामाण्ये—"शिवे शिवागमे शैवे धर्मे शिवपरिग्रहे। जङ्गमे प्राणलिङ्गैक्ये शिवलिङ्गार्चने गुह ।। शिवस्थानेषु सर्वेषु वाराणस्यादिकेषु च। विपरीता भवेद् बुद्धिर्यस्य स्यात् स बहिर्नरः ।। शिवनिन्दापरो मूढः शिवशास्त्रविनिन्दकः। तस्य नो निष्कृतिर्दृष्टा क्वापि शास्त्रेऽपि केन च ।।" इति स्कान्दशिवधर्मोत्तरादिवचनैर्मरणान्तप्रायश्चित्तसूचकनिष्कृत्यभावबहिष्कार्यत्वादिविधानविरोधापत्तेः। नह्यप्रामाणिकार्थनिन्दायां दोषोद्घाटनं युक्तम्।

किञ्च, स्थावरलिङ्गप्राणलिङ्गप्रतिष्ठाकालकर्तव्यद्वादशसंस्कारविधायक—"कुण्डमण्टपनिर्माणं तत्तत्संस्कारमेव च। वास्तुपूजा च हवनं पालिकासु प्रतिष्ठितम् ।।" इत्यादीनाम् अधःपट्टिकाद्याज्यप्रतारिकान्ततत्स्थानविशेषे भुवन-तत्त्व-कला-मन्त्र-पद-वर्णाध्वन्यासविधायकवचनानां स्थावरे कर्षणादिप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तं च कर्तव्यतत्कर्मविधायकवचनानां कामिककारणाद्यागमान्तर्गतत्वेन पुराणादावभावेन च तदप्रामाण्ये तद्विहितसंस्काराद्यभावेन सकलवैदिकजनावश्यकस्थावरलिङ्गप्रतिष्ठाद्यसिद्धेः।

---

में बताये गये धर्म मुक्ति के साधन हैं, ऐसा वीरागम आदि में बताया गया है। स्कन्दपुराण में भी बताया गया है—"शिव की, शिवागमों की, शिवधर्म की, शिवग्रहण की, प्राणलिंगधारक जंगम की, लिंगार्चक की, शैवालयों की और शिवक्षेत्र की निन्दा करने वाले बहिष्कृत हो जाते हैं। उन लोगों का कोई प्रायश्चित्त ही नहीं है। वे अपरिहार्य कोप के पात्र बन जाते हैं"। इसके अतिरिक्त जमीन पर स्थावर लिंग की प्रतिष्ठा करते समय और शिवदीक्षा संस्कारपूर्वक अंग में लिंग को धारण करते समय उस लिंग के शिलात्वदोष के निवारण के लिये किये जाने वाले जो बारह संस्कार और कुण्ड, मण्डप आदि के निर्माण की क्रियाएँ, वास्तुपूजा, हवन आदि कर्म और लिंग के विभिन्न स्थानों में किये जाने वाले भुवनाध्व, तत्त्वाध्व, कलाध्व, मन्त्राध्व, पदाध्व और वर्णाध्व नामक षडध्व

अपि च, श्रीनीलकण्ठशिवाचार्यचरणकृतभाष्ये—"अङ्गावयवाद्यनन्तमाङ्गल्यगुणगणमणिजलधेः परमशिवस्य" इत्येतद्ग्रन्थेन परमशिवं विशिष्य कानि तान्यङ्गानीत्युक्तेः "सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तता च। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥" (वा० पु० १२।३१; कू० पु० २।८।१३), "ज्ञानं विरागतैश्वर्यं तपः शक्तिः क्षमा धृतिः। स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥" (ब्रह्मा० पु० ३।४।२।२१८-२१९; कू० पु० १।१०।३९-४०) इति शैवागमवचनैरङ्गावयवनिरूपणेन शङ्कराचार्यकृतप्रपञ्चसारादिग्रन्थे त्र्यम्बकषडक्षरीप्रभृतिमन्त्रानुष्ठानपुरश्चरणप्रयोगाद्युपयोग्यङ्गावरणादिनिरूपणस्यागमवचनैरेव कृतत्वेन तद्विरोधापत्तेश्च। नहि भाष्यकारैरप्रामाणिकवचनान्युदाह्रियन्ते। एवं व्यासमन्वादिऋषिप्रणीतस्मृतीतिहासपुराणादीनामिव "त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणः",

---

शुद्धि संस्कार और प्रतिष्ठा आदि से उत्सव पर्यन्त किये जानेवाले कर्म कामिक, कारण आदि आगमों में ही विशेष रूप से बताये गये हैं। इन आगमों को छोड़कर और किसी ग्रन्थ व पुराणों में भी ये नहीं बताये गये। इसलिये इन सब आगमों को अप्रामाणिक मानने पर सभी वैदिकों के आवश्यक प्रतिष्ठा आदि कर्म ही समाप्त हो जायँगे।

वीरशैव मताचार्य नीलकण्ठ शिवाचार्य आदि द्वारा रचित भाष्य आदि ग्रन्थों में भगवान् परशिव के असाधारण एवं अनन्त कल्याण गुणों का प्रतिपादन करते समय शिवागमों का प्रमाण देते हुये कहा गया है कि परशिव सर्वज्ञ, नित्यतृप्त, अनादिबोध स्वरूप, स्वतन्त्र, अलुप्तशक्तियुत और अनन्त शक्तिवाले हैं"। यह भी बताया गया है—"ज्ञान, वैराग्य, ऐश्वर्य, तपश्शक्ति, क्षमा, धृति, सृष्टिकर्तृत्व, आत्मसम्बन्ध, अधिष्ठातृत्व और अव्ययत्व नामक नाशरहित दस धर्म भगवान् परशिव में ही है"। श्रीशंकराचार्य ने इसी प्रकार प्रपञ्चसार में त्र्यम्बक, षडक्षर

"विश्वाधिको रुद्रो महर्षिः"(श्वे० उ० ३।४) इति ब्रह्मर्षित्वेन, "निरवद्यं निरञ्जनम्" (श्वे० उ० ६।१९) इति नित्यत्वेन च प्रसिद्धपरशिवप्रणीतागमप्रामाण्यस्यापरिहार्यत्वाच्चेति ।

न चरमः पक्षः, विष्णोर्जगन्मोहनीवेषधारणसमयेऽशेष-जगन्मोहकत्वस्य रामाद्यवतारे सीतालक्ष्मणवियोगादिजनित-व्यामोहस्य स्वतोऽपि सत्त्वेन च परप्रतारकबुद्धावतारप्रणीत-वेदविरुद्धागमानामप्रामाण्ये त्विष्टापत्तेः ।

ननु कूर्मपुराणे—"एवं संबोदितो रुद्रो माधवेन मुरारिणा। चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।। कपालं लाकुलं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ।।"(१।१५।११२-११३) इति शिवकेशवयोरुभयोरपि मोहशास्त्रकर्तृत्वप्रतिपादनेन तथान्यानि सहस्रश इत्यन्यशब्देन शैवागमानामपि ग्रहणात् तेषामप्यप्रामाण्यमेवेति चेन्न, तत्रैव—"निर्मितं हि मया पूर्वं व्रतं पाशुपतं

---

तृतीयः कल्पः—बुद्धजिनादिनास्तिकमण्डलप्रणीतागमानामप्रामाण्यमिति, तत्रेष्टापत्तिरेव भवतामिवास्माकमपि, बौद्धाद्यागमानामप्रामाण्येऽपि शैवागम-

आदि मन्त्रों के अनुष्ठान और पुरश्चरण आदि का विधान शैवागमों को प्रमाण मान कर ही शास्त्रसम्मत सिद्ध किया है । यदि ये सब आगम अप्रामाणिक माने जायँगे, तो इन सभी भाष्यकारों के वचनों का विरोध होगा । तत्त्व के पक्षपाती भाष्यकारों के वचनों को कैसे असत्य कहा जा सकता है ? आगम अप्रामाणिक होते तो ये लोग उन्हें प्रमाण के रूप में कैसे उद्धृत करते ? ऐसे ही व्यास, मनु आदि ने भी इन आगमों को प्रामाणिक मान कर ही दृष्टान्त के रूप में लिया है ।

यदि आप कहें कि बुद्ध आदि से लिखित आगम ही अप्रामाणिक हैं, तो यह बात हमें भी इष्ट ही है, क्योंकि किसी एक समय महाविष्णु ने प्रपंच की रक्षा के निमित्त जगन्मोहिनी का रूप धारण किया था और रामावतार के समय दुनिया को मोहित करने की इच्छा से सीता, लक्ष्मण आदि के वियोग से उत्पन्न मोह को दिखलाया था। ऐसे ही बुद्ध के रूप में अवतरित होकर उन्होंने वेद के विरुद्ध

शुभम् । गुह्याद् गुह्यतरं सूक्ष्मं वेदसारं विमुक्तये ।।...
एष पाशुपताचारः सेवनीयो मुमुक्षुभिः ।।'' (२।३७।१४१, १४३) इति रुद्राक्षलिङ्गधारणरूपपाशुपतव्रतप्रतिपादकागमस्य श्रौतत्वं प्रतिपाद्य, ''अन्यानि शैवशास्त्राणि लोकेऽस्मिन् मोहनानि वै । वेदवादविरुद्धानि मयैव कथितानि तु ।।''(२।३७।१४५) इत्युक्त्वा ''वामं पाशुपतं सौमं लाकुलं चैव भैरवम् । न सेव्यमेतत् कथितं वेदबाह्यं तथेतरत् ।।'' (२।३७।१४६) इति, ''यानि शास्त्राणि दृश्यन्ते युगेऽस्मिन् विविधानि तु । श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा हि तामसी ।। कापालं पाञ्चरात्रं च यामलं वाममार्हतम् । एवंविधानि शास्त्राणि मोहनार्थानि तानि तु ।।'' (१।११।२७२-२७३) इति श्रुतिस्मृतिविरुद्धानामेवाप्रामाण्यस्वीकारात्, किरातवेषधारिपरमेश्वरप्रणीतशाबरतन्त्रबुद्धावतारप्रणीतबौद्धाद्यागमानामेवान्यपदेन ग्रहणात् ।

ननु तर्हि शैवागमानां श्रुतिस्मृतिसारमयत्वं कथमिति चेत्—पूर्वोक्तसर्वलिङ्गंस्थापयतीत्याद्यनेकश्रुतिस्मृतिविहितलिङ्गधारणविधायकत्वेन गौतममन्वाद्याचारविषयस्थावरलिङ्ग-

---

अनेक आगमों की रचना की है । ऐसे आगमों को कोई भी वैदिक मतानुयायी स्वीकार नहीं कर सकता, क्योंकि रुद्र ने विष्णु से प्रेरित होकर जगत् को मोहित करनेवाले शास्त्रों की रचना को है और विष्णु ने रुद्र से प्रेरित होकर भ्रमोत्पादक शास्त्रों को रचा है । वही कापाल, लाकुल, शाक्त और भैरव मत कहे जाते हैं । ऐसे ही वेदसार एवं अतिसूक्ष्म पाशुपत व्रत को ईश्वर ने बताया है । रुद्राक्ष और लिंगधारण रूप इस पाशुपत व्रत का मुमुक्षु जनों को अवश्य अनुष्ठान करना चाहिये, ऐसा ईश्वर का आदेश है । अतः कामिक से लेकर वातुल पर्यन्त जो अट्ठाईस दिव्य आगम हैं, ये सब वैदिकों द्वारा स्वीकृत हैं । इस सन्दर्भ में कहा गया है कि वाम, अवैदिक पाशुपत, सोम, लाकुल और भैरव आदि मत वेदबाह्य होनें

प्रतिष्ठाविधायकत्वेन कालाग्निरुद्ररुद्रोपनिषदादिसिद्धविभूति-रुद्राक्षधारणविधायकत्वेन तत्त्वमसीत्याद्यनेकश्रुतिबोधितजीव-ब्रह्मैक्यस्वरूपलिङ्गाङ्गसम्बन्धबोधकत्वेन छान्दोग्यबृहदारण्य-कादिश्रुतिविहतानेकार्थत्वाच्चेति ।

इति श्रीमद्वेदवेदान्तपुराणागमेतिहाससारभूतश्रीमद्विशिष्टाद्वैत-सिद्धान्तस्थापनाचार्यपाषण्डाब्जमहागजपाञ्चरात्रप्रालेयचण्ड-चण्डकिरणाद्वैतकुम्भिकुम्भदलनरौद्रपञ्चाननश्रीमन्नन्दी-श्वरविरचितायां लिङ्गधारणचन्द्रिकायां
प्रथमो भागः ॥

---

प्रामाण्याक्षतेरिति ।

महामहोपाध्यायपण्डितश्रीशिवकुमारमिश्रशास्त्रि-विरचितशरन्नामिकायां लिङ्गधारणचन्द्रिका-व्याख्यायां प्रथमभागः समाप्तः ॥

से अनुष्ठान करने योग्य नहीं है। श्रुतियों और स्मृतियों के विरुद्ध जो भी हों, वे सब तामस आगम कहे जाते हैं, अतः प्रामाणिक नहीं हैं ।

इस प्रकार वेदों के अनुवर्ती अनन्त शैवागम, 'सर्वलिङ्गं स्थापयति'' आदि श्रुतियां, ''तत्त्वमसि'' आदि महावाक्य और ईश, केन, कैवल्य, कालाग्निरुद्र, बृहदारण्यक आदि उपनिषदें लिंगधारण, लिंगांगसामरस्य, विभूति और रुद्राक्ष-धारण आदि का विधान करते हैं, अतः मोक्ष को चाहने वाले वीरशैव क्रम से गुरु से दीक्षा लेकर, मस्तक आदि उत्तम अंगों में शरीरपातपर्यन्त शिवलिंग को धारण करते हुए तीनों कालों में, द्विकाल अथवा एक काल में अपने वाम हस्त रूपी सिंहासन पर उस शिवलिंग को रख कर गन्ध, अक्षत आदि से अर्चना करते हुए त्रिविध देह में त्रिविध लिंगों की सिद्धि पाकर—''एकेन जन्मना मुक्ति-र्वीराणां तु महेश्वरि'' इस शिवागम वाक्य के अनुसार दुःखस्वरूप भवपाश से छूट कर शिवसायुज्य को प्राप्त कर लेते हैं ।

इस प्रकार वेद, वेदान्त, पुराण, आगम, इतिहास आदि समस्त शास्त्रों के सारभूत विशिष्टाद्वैत सिद्धान्त के स्थापक आचार्य, पाषण्ड रूपी कमल के लिये मदमत्त गज स्वरूप, पांचरात्र रूपी प्रालेय (धुन्ध) के लिये प्रचण्ड सूर्यसदृश, अद्वैत-रूपी हाथी के मस्तक के दलन के लिये रौद्र सिंह के समान, श्रीमान् नन्दीश्वर ( शिवाचार्य ) विरचित लिंगधारणचन्द्रिका का
प्रथम भाग यहाँ समाप्त होता है ।

——

# उत्तरभागः

नन्वेतावता लिङ्गधारणसिद्धावपि मृतस्य ब्राह्मणस्य दाहक्रिया विधीयते, भवदनुष्ठीयमानखननस्य कुत्राप्यविधानात् कुतस्तत्सिद्धिः? इति चेदुच्यते—ऋग्वेदे—"कर्दमेन प्रजा भूता मयि सम्भव कर्दम" (ऋ० खि० ५।८७।११) इति मन्त्रेण तत्सिद्धिः। कर्दमेन पृथिव्या, प्रजाः तिर्यङ्मनुष्यादिनानाविधजीवकोटयः, भूताः संजाताः। सजलमृत्पिण्डवाचककर्दमशब्दप्रयोगेण प्रधानोपादानभूतायां पृथिव्यां जलादेरुपस-

---

लिङ्गधारणस्य कर्तव्यतामारभ्य लिङ्गधारणमूलभूतश्रुतिस्मृतिकामिकाद्यागमानां प्रामाण्यपर्यन्ता बहवोऽर्थाः पूर्वभागे निरूपिताः। इदानीं लिङ्गधारिणां प्रयाणोत्तरं तन्मतेऽनुष्ठीयमानायां तद्देहस्य भूमिखातनिक्षेपात्मकप्रतिपत्तौ प्रमाणमुपन्यस्यते। तत्र—"कर्दमेन प्रजा भूता" (ऋ० खि०

### भूनिक्षेप समाधि की आवश्यकता

**शंका**—यहाँ तक वेदागम, स्मृति, पुराण, इतिहास आदि के प्रमाणों से, युक्ति और अनुभव से शिवलिंग को कण्ठ आदि उत्तम अंगों में से किसी एक अंग पर धारण करके प्रतिदिन हथेली पर रखकर पूजा करनी चाहिये, इस बात की सिद्धि तो हो गई, लेकिन मृत ब्राह्मण के शरीर के लिये अग्निसंस्कार (जलाने) का विधान किया गया है, भूनिक्षेप (दफनाने) का विधान किसी ग्रन्थ में नहीं बताया गया। ऐसी अवस्था में लिंगांगी वीरशैव के मृत शरीर का कैसे भूनिक्षेप किया जाता है?

**समाधान**—ऐसी बात नहीं है। ऋग्वेद का यह वचन इसमें प्रमाण है—"कर्दमेन प्रजा भूता मयि सम्भव कर्दम"। अन्वयार्थ—कर्दमेन = पृथिवी से, प्रजाः = पशु, पक्षी, मानव आदि समस्त जीव, भूताः = उत्पन्न हुए हैं। इसलिये हे कर्दम = जलमिश्रित मृत्पिण्ड रूप हे पृथिवी, मयि = काल के परिपाक से मृत मेरे शरीर को समाधि नामक आपके पेट में रखने पर, सम्भव = मृत्तिका से आच्छादित करके मेरे सभी पापों को नष्ट करके उत्तम लोकों की प्राप्ति करा दें।

र्जनविधया सहकारित्वमित्यवगन्तव्यम्, तदभावे घनीभूत-पृथिवीमात्रस्य देहनिर्माणोपयोगित्वाभावात् । तादृशीं महीं प्रति मृतपुरुषेण प्रार्थ्यते—मयि सम्भव कर्दम इति । हे सजलमृत्पिण्डात्मकपृथिवि ! मयि कालपरिपाकतो मरणे प्राप्ते द्वात्रिंशत्पर्वयुक्समाध्यपरनामकत्वद्गर्भस्थिते मच्छरीरे सम्भव आच्छाद्य विलीनावस्थां गमयित्वा दुरितनिवृत्तिपूर्वकं मामुत्तमलोकप्राप्तिमन्तं कुर्वित्यर्थः । "महीं देवीं विष्णुपत्नीमजूर्याम्

---

५।८७।११), "महीं देवीं विष्णुपत्नीम्" (तै० ब्रा० ३।१।२।६) इति ऋग्द्वयम्,

इस मन्त्र में 'कर्दम' शब्द का प्रयोग किया गया है। जल मिश्रित मिट्टी का नाम है कर्दम, न कि केवल मिट्टी का। यहाँ कर्दम शब्द से पृथिवी, जल, तेज, वायु और आकाश नामक पाँच महाभूतों को उपलक्षणतया बताया गया है। इन सभी भूतों में पृथिवी ही प्रधान होने से उपादान कारण मानी गई है। जल, तेज, वायु और आकाश विशेषणों के रूप में प्रयुक्त होने से सहकारी कारण माने जाते हैं। लोक में जो भी कार्य हैं, उनकी सिद्धि सहकारी कारणों के बिना केवल उपादान कारण से नहीं हो पाती। इसलिये जल आदि के मिश्रण के बिना केवल काठिन्य गुण-युक्त पृथिवी से शरीर का निर्माण नहीं हो सकता। इसीलिये यहाँ जलमिश्रित पृथिवी को निमित्त बनाकर मृत पुरुष के लिये उससे प्रार्थना की गई है।

परायत नामक नक्षत्रेष्टि में यह मन्त्र पढ़ा गया है—

महीं देवीं विष्णुपत्नीमजूर्यां प्रतीचीमेनां हविषा यजामः ॥

यह मन्त्र भी मृत शरीर को जमीन में दफनाना चाहिये, ऐसा विधान करता है। इस निक्षेप क्रिया के जो कर्ता हैं, वे अपने इष्टमित्र तथा बन्धु-बान्धवों के साथ उस मृत व्यक्ति के शरीर को रखने के लिये बनाये गये विमान में बिठाकर गाजे-बाजे के साथ समाधि के पास ले जाकर उस मृत शरीर के निमित्त शास्त्रोक्त सभी संस्कारों को पूरा कर उस शरीर को समाधि में रखते समय इस मन्त्र का पाठ करते हैं।

अजूर्यां विष्णुपत्नीं महीं देवीम् = भगवान् विष्णु की पत्नी के रूप में प्रसिद्ध पूज्य इस भूदेवी की, हविषा = मृत पुरुष के देहरूप हविर्द्रव्य से, यजामः = आराधना

प्रतीचीमेनां हविषा यजामः" इति परायते नक्षत्रेष्टिपठितमन्त्रेणापि खननसिद्धिर्भवति। अत्र ज्ञातिबन्धुसमेतकर्त्रा मृतपुरुषशरीरं शिबिकादिना समीपं प्रापय्य तत्र कर्तव्ययावत्संस्कारानन्तरं बिलप्रवेशकरणे विनियुक्तस्यास्यायमर्थः— एनां महीं देवीं प्रति हविषा मृतपुरुषशरीररूपेण यजाम इति। तथा चाग्नौ हूयमानपुरोडाशाज्यादिहविष इव पृथिवीबिलनिक्षिप्तशरीरस्य तत्रैव विलीनताप्रसक्त्या तस्याश्च समाधौ गोपनं विनाऽनुपपन्नत्वात् सिद्धिरिति सङ्केतग्राहकत्वेन श्रुतिस्मृत्यादिनिखिलशब्दप्रमाणापेक्षिततया स्वतःप्रमाणत्वेन च प्रसिद्धनिघण्टुवचनादपि पर्यवसानगत्या तत्सिद्धिः। तथाहि—पाञ्चभौतिकदेहस्य पञ्चता कालधर्म इति पञ्चभूतानां संपुटीकरणेन देहारम्भः, तस्य कालपरिपाकवशात् पञ्चत्वप्रसक्तौ पञ्चावयवानां पञ्चभूतेष्वेकीकरणमावश्यकम्। तत्र वाय्वाकाशयोरप्रत्यक्षत्वेन तत्रानुक्रमणं

---

करते हैं, इस प्रकार इस मन्त्र का अर्थ है। यज्ञ में अग्नि देवता के निमित्त स्वाहाकार से समर्पित किये जानेवाले आज्य, पुरोडाश आदि हविर्द्रव्य उस वैदिकाग्नि में जैसे विलीन हो जाते हैं, वैसे ही यह मृत शरीर भी एक प्रकार का हविर्द्रव्य होने से इसको समाधि में छिपाये बिना यह छिप नहीं सकता। इससे मृत देह का भूनिक्षेप करना चाहिये, यह अर्थ सिद्ध हो जाता है।

**शंका**—शरीर पृथिवी, जल, अग्नि, वायु और आकाश नामक पाँच भूतों से निर्मित पांचभौतिक कहा गया है। ऐसे भौतिक शरीर के पंचत्व ( मरण ) को प्राप्त हो जाने पर उसके प्रत्येक अंश प्रत्येक भूत में मिलते हैं, न कि सभी भूतों के अंश पृथिवी में। इसलिये इस भूनिक्षेप को शास्त्रसम्मत कैसे माना जाय ?

**समाधान**—देह में रहने वाले पंचभूतांशों को भिन्न-भिन्न पंचभूतों से मिलाना उचित ही है, किन्तु इन पांच भूतों में आकाश और वायु ये दोनों नहीं दीखते, अतः इनमें से आकाशांश को आकाश में और वायु के अंश को वायु में नहीं मिला सकते। उसके अतिरिक्त अग्नि और जल ये दो भूत प्रत्यक्ष होने पर भी पृथिवी

व्यवहारयोग्यं न भवतीति पृथिव्यप्तेजःस्वेव संयोजनं कार्यम् । तत्राप्यग्निजलयोः पृथिव्याधारकत्वेन सर्वाधारपृथिव्यामेव निक्षेपणं कृत्वा तत्त्वसंयोजनमावश्यकम् । अत एवोक्तं पराशरस्मृतौ—"शरीरं पञ्चतत्त्वाख्यं तत्त्वं तत्त्वेन योजयेत् । तत्रापि पृथिवीतत्त्वे योजनं मोक्षसाधनम् ।।" इति । अपि च, अवसानेऽग्निसंस्कारवतामप्यसृङ्मांसमिलितदेहस्य दहनदह्यमानत्वेऽप्यस्थ्यादिस्वरूपाङ्गशेषस्य पृथिवीं गच्छेति मन्त्रेण महीतले गङ्गाऽम्भसि वा क्षेपणमावश्यकम् । तथा चैकदेशस्याग्निदाह्यत्वमवशिष्टस्य पृथिवीजलादिनिक्षेप इत्यङ्गीकारेऽर्थवैरस्यप्रसङ्गात् सर्वाधारभूतावनिनिक्षेपणमेव कर्तव्यम् । तदुक्तं कूर्मपुराणे—"दग्धेऽपि देहे पुनरङ्गशेषो निक्षिप्यतेऽसौ भुवि वा जले वा । तस्मात् तु निक्षेपविधिर्बलीयान्निःशेषभावादपुनर्विधानात् ।।" इति ।

---

"शरीरं पञ्चतत्त्वाख्यम्" इति पराशरस्मृत्यादि च प्रमाणत्वेनोपन्यस्तम् । पितृमेधप्रकरणपठितश्रुत्यादीनां विरोधमाशङ्क्य च लिङ्गाङ्गसङ्गिब्राह्मण-

के आधार पर ही रहते हैं । इसलिये सबकी आधारभूत पृथिवी में मृत देह का निक्षेप करने पर सभी भूतों के अंश सबमें मिल जाते हैं । इस तरह से यह भूमिनिक्षेप पक्ष ही उत्तम पक्ष माना जाता है । इस पक्ष को पराशरस्मृति का भी समर्थन प्राप्त है । वहाँ कहा गया है कि शरीर पांच भूतों से निर्मित है, अतः इन अंशों को उन भूतों में मिलाना उचित ही है । इसमें से भी पृथिवी तत्त्व में मिलाना ही मोक्षदायक है । कूर्मपुराण में इस निक्षेप क्रिया का सयुक्तिक समर्थन मिलता है कि मृत शरीर को अग्नि में जलाने पर भी; खून, मांस और मज्जा में कुछ अंश के जल जाने पर भी, अस्थि आदि कुछ अंश बिना जले वैसे ही रह जाते हैं । बाद में उन हड्डियों को ले जाकर—"पृथिवीं गच्छ" इस मन्त्र का उच्चारण करते हुए भूमि में व गंगा जी में छोड़ना पड़ता है । इस प्रकार कुछ अंश को अग्नि में और शेष कुछ अंश को जल व पृथिवी में मिलाना पड़ता है । इसकी अपेक्षा खनन (गाड़ना) की प्रथा को मानकर उस मृत शरीर का सभी भूतों की आधारस्वरूप पृथिवी में निक्षेप किये जाने पर सभी अंश निश्शेष हो जाते हैं । इसलिये जल आदि में मिलाने की कोई आवश्यकता नहीं रह जाती । अतः भूमिनिक्षेप ही उत्तम एवं बलिष्ठ विधि है ।

**न चोदाहृतश्रुतिस्मृत्यादिभिः सर्वत्र पिधानविधाने दहनविधायकपितृमेधादिपठितश्रुत्यादीनां निर्विषयत्वप्रसङ्ग इति वाच्यम्, पूर्वोदाहृतपद्मपुराणशातातपमन्वादिस्मृतिवचनानुरोधेन सामान्यतोऽपि खननविधायकवाक्यानां छागपशुन्यायेन लिङ्गाङ्कितब्राह्मणविषयत्वमङ्गीकृत्य दहनविधायकवाक्यानां तदतिरिक्तविप्रादिविषयत्वेन सङ्कोचे बाधकाभावात् । अन्यथा कर्मद्वयविधायकवाक्यानां परस्परविरोधेनोभयोरप्यवैदिकत्वापत्तेः ।**

---

विषयकत्वेन खननवाक्यानां तदितिरिक्तविषयकत्वेन पितृमेधवाक्यानां व्यवस्थापनं क्रियते, परस्परविरुद्धार्थवाक्यानां विना व्यवस्थां प्रामाण्यायोगेन व्यवस्थाया आवश्यकत्वात् ।

**शंका**—अच्छी बात है, किन्तु यदि ऐसा मान लिया जाय, तो जब श्रुति, स्मृति पुराण आदि सबके सब मृत शरीर की भूनिक्षेप विधि को ही सर्वश्रेष्ठ मानते हैं, तो मृत शरीर को जलाना चाहिये, ऐसा पितृमेधादि प्रकरण में बताने वाली श्रुतियों का कोई प्रामाण्य ही नहीं रह जायगा ?

**समाधान** – ऐसी बात नहीं। पितृमेध प्रकरण में दहन ( जलाने से सम्बद्ध ) विधि का वचन उन लोगों के लिये है, जो लिंगधारी नहीं हैं। निक्षेप-विधायक श्रुतियाँ लिंगधारियों के लिये हैं, ऐसा अर्थ का संकोच कर लेना चाहिये। जहाँ भी इस प्रकार का संदेह हो जाता है, उन स्थानों में पूर्वमीमांसा के 'छागपशुन्याय'' से अर्थ का संकोच कर लिया जाता है। यह न्याय पहले भी आ चुका है और इसके पूरे अर्थ का भी विवेचन किया जा चुका है। इस प्रकार का अर्थसंकोच न करने पर दहनवचन और खननवचन में विरोध हो जाता है। ऐसे विरोधयुक्त वाक्य प्रामाणिक नहीं माने जाते और इन दोनों वचनों को अवैदिकत्व दोष लग जाता है। इस प्रकार के सन्दर्भों में पूर्वाचार्य परस्पर विरुद्धार्थक श्रुतियों के अर्थ को संकुचित करके सभी श्रुतियों के अभिप्राय का समन्वय कर लेते हैं। जैसा कि "द्वा सुपर्णा" आदि श्रुतियों के प्रसंग में किया गया है।

**अत एव दर्पणे ब्रह्मविद्याविद्वर्यैरुक्तम्—"जीवब्रह्मणोरभेदाङ्गीकारे "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति ।।" (श्वे० उ० ४।६), "द्वे ब्रह्मणी वेदितव्ये परं चापरं च" (मैत्रा० ६।२२) इति भेदप्रतिपादकवाक्यविरोधेन भेदाङ्गीकारे—**

---

अत्रैव प्रसङ्गाद् विशिष्टाद्वैतसिद्धान्तमपि किञ्चिदुपपादयति—अत एव दर्पण इत्यादिना । विरोधाभावादिति । द्वा सुपर्णा सयुजा सखाया इत्यादि । द्वौ सुपर्णावित्यर्थः । "सुपां सुलुग्"(पा० ७।१।३९) इत्यादिशास्त्रेण द्विचनस्य डादेशः । अत्र—"ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुः"(भ०गी० १५।१) इत्यादिना शरीरस्य वृक्षत्वेन वर्णनाच्छरीरमेव वृक्षशब्देनोच्यते । लौकिकपक्षिणोरिव शरीररूपवृक्षाश्रितत्वाज्जीवात्मपरमात्मनोः पक्षित्वेन वर्णनं क्रियते । समानं वृक्षं परिषस्वजाते इति । जीवात्मपरमात्मानावुभावपि एकमेव शरीररूपं वृक्षमधिष्ठितवन्तौ । तयोर्जीवात्मपरमात्मनोर्मध्येऽन्योऽर्थाज्जीवः पिप्पलं कर्मफलं स्वादु, उपलक्षणमिदं स्वस्वकर्मानुसारेण स्वादु अस्वादु वा, अत्ति भुङ्क्ते । अन्यः परमात्माऽनश्नन् अविद्याया अभावेनालुप्तचैतन्यशक्तितया शरीरधर्मासम्बद्धः । तथा च कर्मबन्धाभावेन कर्मफलं सुखं दुःखं चाभुञ्जान एवाभिचाकशीति देदीप्यते । अस्यां श्रुतौ जीवब्रह्मणोर्भेदः प्रतिपादितो भवति । एवम्—"द्वे ब्रह्मणो वेदितव्ये परं चापरं च" इत्यत्रापि ।

द्वा सुपर्णा = जीवात्मा और परमात्मा नामक दो पक्षी, 'सुपां सुलुक्" इस शास्त्र से द्विवचन में डादेश हुआ है । सयुजा = निरन्तर साथ रहने वाले, सखाया = एक दूसरे से स्नेह रखने वाले, समानं वृक्षं = एक ही शरीर रूपी वृक्ष का, परिषस्वजाते = आश्रय लिये हुए हैं । तयोः = उन दोनों में से, अन्यः = जीवात्मा रूपी एक पक्षी, पिप्पलं = कर्मजन्य सुख-दुःख रूप फल को, स्वादु = आसक्तिपूर्वक, अत्ति = अनुभव करता है । अन्यः = परमात्मा रूपी दूसरा पक्षी, अनश्नन् = कर्मफल का अनुभव किये बिना, अभिचाकशीति = सभी जगह प्रकाशमान रहता है ।

द्वे ब्रह्मणी = दो प्रकार के ब्रह्म हैं । परं चापरं च = उन दोनों में से एक को परमात्मा और दूसरे को जीवात्मा, वेदितव्ये = जानना चाहिये ।

**"नेह नानास्ति किञ्चन" (बृ० उ० ४।१४९), "एक एव रुद्रो न द्वितीयोऽवतस्थे" (श्वे० उ० ३।२), "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा० उ० ७।२४।१) इत्याद्यभेदविधायकवाक्यविरोधेन चोभयोरप्रामाण्यप्रसक्त्या**

---

"एकमेवाद्वितीयं ब्रह्म" ( छा० उ० ६।२।१ ), "नेह नानास्ति किञ्चन" ( बृ० उ० ४।४।१९ ), "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" ( बृ० उ० ३।७।२३ ) इत्यादौ, "यत्र नान्यत् पश्यति नान्यच्छृणोति" ( छा० उ० ७।२४।१ ) इत्यादौ च जीवब्रह्मणोरेकत्वं प्रतिपाद्यत इति परस्परश्रुतिविरोधान्न केवलं द्वैतं नाप्यद्वैतं मन्तुं शक्यते, अपि तु विशिष्टाद्वैतपक्ष एव मन्तव्यः। तदर्थस्तु—विशिष्टं च विशिष्टं च विशिष्टे, विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति। अत्र सूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टं ब्रह्म एक-

इन श्रुतियों में शरीर का "ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम्" इस प्रकार ऊपर जड एवं नीचे डालियों वाले एक विलक्षण पीपल वृक्ष के रूप में वर्णन किया गया है। यह जीवात्मा और परमात्मा इस शरीर रूपी पीपल वृक्ष में परस्पर मित्रता से रहते हैं। इन दोनों में से जीवात्मा अज्ञान से आवृत है। इसलिये कर्मों के अनुगुण फलों का अनुभव करता है। परमात्मा तो अविद्यारहित है। इसलिये कर्मफल का अनुभव नहीं करता। इस प्रकार ये श्रुतियाँ जीवात्मा और परमात्मा में भेद को स्वीकारती हैं। इसके विपरीत "एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन, नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति", "एक एव रुद्रो न द्वितीयाय तस्थे" ये श्रुतियाँ अद्वैतवाद का समर्थन करती हैं।

इन श्रुतियों का कहना है कि परमात्मा सजातीय, विजातीय, स्वगत नामक तीन प्रकार के भेदों से रहित एक ही वस्तु है। परमात्मा से भिन्न और कोई वस्तु नहीं है। परमात्मा के अतिरिक्त कोई देखने वाला, सुनने वाला, जानने वाला नहीं है। परमात्मा के अतिरिक्त और कोई दूसरी वस्तु नहीं है। इस प्रकार यहाँ जीवात्मा और परमात्मा का अभेद बताया गया है। ये दोनों प्रकार के श्रुतिवाक्य हैं। इन सबका प्रामाण्य अपेक्षित है। इसलिये विशिष्टाद्वैत पक्ष को स्वीकार करते हुए सभी श्रुतियों की प्रामाणिकता को मानना ही उत्तम पक्ष होगा। कहने का

विशिष्टाद्वैतपक्ष एवाङ्गीकरणीयः । तत्पक्षे तु स्थूलसूक्ष्मचित्प्रपञ्चाकारशक्तिविशिष्टयोरभेदमादायाद्वैतवाक्यानां विशेषणविशेष्यभेदमादाय द्वैतवाक्यानामपि प्रामाण्यसिद्धया विरोधाभावादिति ।

न च दहनस्य विप्रविषयत्वं खननस्य जात्यन्तरविषयत्वमिति वाच्यम्, तेषां वेदविहितकर्माधिकाराभावात्, खननस्यैव विप्रविषयत्वं दहनस्य जात्यन्तरविषयत्वमिति वैपरीत्यापत्तेश्च, आचारविरोधस्योभयत्रापि तुल्यत्वादित्यलम् । ननूदाहृतमन्त्रैः

---

विशिष्टपदेनोच्यते । इदमेवाव्याकृतचिदचित्प्रपञ्चविशिष्टमप्युच्यते । स्थूलचिदचित्प्रपञ्चशक्तिविशिष्टं ब्रह्मापरविशिष्टपदेनोच्यते । तयोरेकत्वमस्तीति सिद्धान्तस्वरूपम् । अर्थात् स्थूलावस्थापन्नस्य सूक्ष्मावस्थापन्नस्य चान्तर्यामिप्रधानभूतं नियामकं परमेश्वरतत्त्वमेकमेव । तस्य चेतनानां जीवानामन्तर्यामिचेतनरूपत्वात् तदपेक्षया नान्योऽतोऽस्ति द्रष्टेत्यादि नान्यच्छृणोतीत्यादि च श्रुतिवाक्यमुपपद्यते । शरीरेन्द्रियाद्यनेकवस्तुवैशिष्टयेऽपि देवदत्त एक एवेदानीं स्वगृहेऽस्तीति व्यवहारस्य प्रवृत्तिवद् एकमेवाद्वितीयं ब्रह्मेत्युपपन्नम् । द्वा सुपर्णा इति तु स्वरसतयैवोपपन्नमिति न कस्यापि श्रुतेर्विरोध इत्याह—विरोधाभावादिति ।

इतः परं संक्षेपेण ग्रन्थकारस्याशयः प्रदर्श्यते । अन्त्यकृत्यविषये पितृमेधसम्बन्धिश्रुतिस्मृतीनां तदितरशैवागमादिवाक्यानां च जातिभेदेन

यही अभिप्राय है कि "विशिष्टं च विशिष्टं च विशिष्टे, तयोरद्वैतं विशिष्टाद्वैतम्" इस समास प्रक्रिया के आधार पर एक विशिष्ट पद से सूक्ष्म चिदचित्प्रपंचविशिष्ट ब्रह्म को और दूसरे विशिष्ट पद से स्थूलचिदचित्प्रपंचविशिष्ट ब्रह्म को स्वीकार करते हुए इन दोनों का अभेद बताने से अभेद श्रुतियों की और विशेषणविशेष्यभेद को स्वीकार करते हुए द्वैत श्रुतियों की प्रामाणिकता को स्वीकार किया गया है ।

**शंका**—ऐसा क्यों ? दहनविधायक सभी वचन द्विजों को उद्देश्य करके और खननविधायक वचन शूद्रों को निमित्त बनाकर आये हैं । लिंगधारी लोग तो इससे सम्बद्ध नहीं हैं, ऐसा क्यों नहीं कह सकते ?

**समाधान**—ऐसा नहीं कह सकते, क्योंकि द्विजमात्र के लिये दहनविधि और शूद्रों के लिये खननविधि को स्वीकार करने पर दहनविधि की उपाधि में खननविधि भी वैदिक विधि होने से शूद्रों के भी वेदविहित कर्माधिकार को स्वीकारना

खननस्यापाततः प्रसक्तावपि मृतपुरुषं खनेदिति विधिवाक्याभावेन न वैधत्वमिति चेत् ? मैवम्, प्रेतं दहेदिति विध्यभावेऽपि विधिप्रयोजकरूपसम्पत्त्या पितृमेधादिपठिततत्तन्मन्त्रलिङ्गैः प्रेतं दहेदिति विधिकल्पनवत् पूर्वोदाहृतानेकमन्त्रलिङ्गैर्विधिप्रयोजकरूपसम्पत्त्या च मृतपुरुषं खनेदिति विधिकल्पनौचित्यादिति ।

वस्तुतस्तु सदानन्दोपनिषदि—"शैवं लिङ्गमुरस्थले धार्यं विप्रेण" (७-८) इत्यादिना लिङ्गधारणं विधाय साक्षादेव

---

व्यवस्था न शक्यते कर्तुम्, विनिगमनाविरहेण वैपरीत्यस्यापि शङ्कनीयत्वात् । खनने लिङ्घटितविधिर्न दृश्यत इति न शङ्कनीयम् ।

होगा, तब तो शूद्रों को वेदोक्त कर्माधिकार नहीं है, ऐसा कहने वाले धर्मशास्त्र ही व्यर्थ हो जाते हैं । तब तो ब्राह्मणों को खननविधि और शूद्रों को दहनविधि का अनुसरण करना है, ऐसा भी कह सकते हैं न ? कहने का अभिप्राय यह है कि आचार-व्यवहारों में विरोध हो जाने से सभी दहन-वाक्य लिंगियों के अतिरिक्त सभी द्विजों को विषय बनाते हैं और सभी खनन-वाक्य लिंगांगियों को, ऐसा निर्णय कर लेना ही न्यायसंगत है ।

**शंका**—पूर्व में बताये गये 'कर्दमेन' इत्यादि मन्त्रों का जो अर्थ किया गया कि लिंगांगी के मृत शरीर का भूनिक्षेप करना चाहिये, यह बिना विचार किये सामान्य दृष्टि से बताया गया है । ऐसा अर्थ कर लेने पर भी "मृतपुरुषं खनेत्" अर्थात् मृत पुरुष के शरीर का भूनिक्षेप करे, इस तरह लिङ्, लोट्, तव्य प्रत्ययान्त घटित विधिवाक्य के न होने से खनन कर्म की विधिरूपता ही सम्भव नहीं है । तब यह खनन कर्म विधिसम्मत है, यह बात कैसे मानी जाय ?

**समाधान**—तब तो "प्रेतं दहेत्" मृत देह को जलाना चाहिये, इस प्रकार का लिङ्, लोट्, तव्य प्रत्ययान्त विधिवाक्य भी कहीं नहीं है । विधि की प्रयोजकता मानकर पितृमेधादि प्रकरणों में बताये गये मन्त्रसिद्ध संकेतों से "प्रेतं दहेत्" इस विधि की कल्पना जैसे की गई है, वैसे ही "कर्दमेन प्रजा भूताः" इस प्रकार के मन्त्रों में रहने वाले संकेतों के आधार पर "मृतपुरुषं खनेत्" मृत पुरुष का भूनिक्षेप करना चाहिये, ऐसी विधि की परिकल्पना कर सकते हैं ।

खननमपि विधीयते—"शिवा तनूरचित्ताद्बिले निक्षिपेत्"(१०) इति । शिवा लिङ्गरूपशिवसम्बन्धिन्यो यास्तनवस्तास्तनूरचित्तान्मरणादूर्ध्वं बिले निक्षिपेत् खननक्रियां कुर्यादित्यर्थः । उपनिषदन्तरे—"स यावज्जीवो म्रियते, अथैनमवनये हरन्ति" इत्यनेन खननं विधीयते । शिवभक्तो जीवः, यावन्म्रियते मृतो भवति, अथ मरणानन्तरमेनं भक्तमवनये भूम्यै हरन्ति पृथिवीगर्भे समाधिक्रियां कृत्वा भक्तदेहहरणं कुर्यादित्यर्थ इति । न चावनये हरन्तीत्यत्राऽवन्यामग्निना हरन्तीत्यर्थः किं न स्यादिति वाच्यम्, विप्राय गां दद्याद् अदद्याद् दानं स्वगोत्राय"

---

स्मृत्यादिनानुमेयत्वात् । सदानन्दोपनिषदादौ विधिरप्यस्ति । शिवधर्म-

इस सन्दर्भ में सदानन्दोपनिषत् का वचन भी द्रष्टव्य है—शैलं = श्रीशैल शिलामय, लिङ्गम् = पंचसूत्रघटित लिंग को, विप्रेण = द्विज, उरःस्थले = वक्षस्थल पर, धार्यम् = धारण करे । शिवा = लिंगरूप शिव से सम्बद्ध, तनूः = शरीर को, अचित्तात् = मर जाने के बाद बिले = शुद्ध भूमि में शास्त्र के अनुसार बनाये गये समाधि स्थल में, निक्षिपेत् = छिपा देना चाहिये । अन्य उपनिषत् में भी बताया गया है—

जीवः = लिंगधारण रूप शिवदीक्षा से विशिष्ट भक्त, यावत् = जब, म्रियते = शरीर को छोड़ देता है, अथ = मरने के बाद, एवं = उस मृत शरीर को, अवनये = पृथिवी के निमित्त, हरन्ति = भूगर्भ में समाधि क्रिया के लिये उस भक्त के शरीर को ले जाना चाहिये ।

**शंका**—इस मन्त्र में रहने वाले "अवनये हरन्ति" इस वाक्य का भूनिक्षेपपरक अर्थ न करके मृत देह को जमीन पर रख कर अग्नि से जलाना चाहिये, ऐसा भी अर्थ किया जा सकता है ?

**समाधान**—नहीं, क्योंकि "विप्राय गां दद्याददद्याद् दानं स्वगोत्राय"(ब्राह्मण को गोदान देना चाहिये, अपने गोत्र से सम्बद्ध व्यक्ति को नहीं देना चाहिये) इस वाक्य में गोदान आदि दानों के पात्र विप्र आदि पदों की जैसे सम्प्रदान संज्ञा आई है, वैसे ही 'हरन्ति' इस हरण पद के पूर्व में रहने वाले अवनि पद की भी सम्प्रदान संज्ञा आई है । फिर इस मन्त्र में अग्नि पद नहीं आया है । न आने पर

इत्यादौ विप्रादेर्गोदानादिसंप्रदानत्ववदस्या एव चतुर्थ्याहरण-सम्प्रदानत्वबोधनात्, वाक्येऽग्निपदाभावेनाध्याहारदोषापत्तेश्च । "भूमौ विनिक्षिपेद् देहं भक्तानां शिवयोगिनाम् । अज्ञात्वा दहनं कुर्यान्नरकं वाऽधिगच्छति ।। न शरीरं दहेद्धीमान् शिवभक्तस्य कस्यचित् । प्रेताशौचं परोक्षे च वर्जयेन्मुनिसत्तम ।। शिवभक्तो मृतो यस्तु दहनादिर्न विद्यते । दग्धस्य दहनं नास्ति पक्वस्य पचनं नहि ।। ज्ञानाग्निदग्धदेहानां न च दाहो न च क्रिया ।।" इति शिवधर्मशास्त्रवचनैर्भक्तानां दहननिषेधपूर्वकखननविधानेन तद्विरोधापत्तेश्चेति । अपि च, "शरीरं पार्थिवं बाह्यं लिङ्गं यत्तद्धि पार्थिवम् । उभयं पार्थिवं यस्माद् गोप्यं रन्ध्रे तु पार्थिवे।।" इति वातुलागमवचनानुरोधेन शरीरलिङ्गयोः पृथिवीप्रकृतिकत्वेन तत्रैव विलीनतौचित्याच्च । न च शरीरस्य पाञ्चभौतिकत्वेन तेजस्येव शरीरहरणं किं न स्यादिति वाच्यम्, सर्वा-

---

शास्त्रवचनेषु लिङ्गाङ्गसङ्गियोगिनां खननातिरिक्तकल्पानुष्ठाने महान् दोषोऽप्युक्तोऽस्ति। शरीरारम्भकाणां पञ्चानां भूतानां मध्ये भूमेः

भी अध्याहार कर लेंगे, ऐसा कहने पर यह वाक्य अध्याहार दोष से विशिष्ट होगा। इसलिये "अवनये हरन्ति" इस पद की भूम्यै हरन्ति' यह सम्प्रदान संज्ञा ही न्यायसंगत है। इस विषय में—"शिवभक्तों और शिवयोगियों के शरीर को भूमि में निक्षेप करना चाहिये। प्रमादवश दहन करने पर नरक का भागी हो जायगा। कोई भी बुद्धिशाली शिवभक्त के शरीर को न जलावे। परोक्ष में भी प्रेताशौच को स्वीकार नहीं करना चाहिये। शिवभक्त का मर जाने के बाद दहन कर्म नहीं करना चाहिये। जले हुए पदार्थ को जैसे नहीं जलाया जाता, वैसे ही ज्ञानाग्नि से जले हुए देह को फिर से नहीं जलाना चाहिये"। इस प्रकार शिवधर्मशास्त्र में बताया गया है।

वातुलागम का भी कहना कि शरीर पृथिवी से सम्बद्ध है। देह में धारण किया गया शिवलिंग भी पृथिवी से सम्बद्ध है। इन दोनों के पार्थिव होने से मृत देह का पृथिवी-निक्षेप करना ही उत्तम है।

**शंका**—ओह ! इससे बढ़कर आश्चर्य की बात क्या है ? क्योंकि हम लोगों का शरीर पांच भूतों के द्वारा सृजित है, न कि केवल पृथिवी से। इसलिये

धारपृथिव्या अत्यन्ताभ्यर्हितत्वेन प्रथमातिक्रमकारणाभावेन च पृथिवीमत्त्व एवैकीकरणौचित्यादिति। तथा च सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेन अग्नीषोमीयवाक्यस्येव खननविधायकवचनानां बलीयस्त्वेन दहनविधायकवाक्यानां "मा हिंस्यात् सर्वा भूतानि" इति वाक्यस्याग्नीषोमीयपशुव्यतिरिक्तविषयत्ववद् ब्राह्मणविशेषव्यतिरिक्तविषयत्वेन संकोचः

---

प्राथम्यं प्राधान्यमस्तीति तत्रैव भूतान्तरापेक्षया योजनमुचितम्। "मा हिंस्यात् सर्वा भूतानि", "अग्नीषोमीयं पशुमालभेत" इति वाक्ययोरिव सामान्यविशेषभावः प्रकृते एकस्मिन् वाक्ये लिङ्गाङ्गसङ्गिपद-

पृथिवी में ही मृत देह का निक्षेप करना है, ऐसा नियम कैसे हो सकता है ? हम अग्नि, जल आदि में भी उसका निक्षेप कर सकते हैं ?

**समाधान**—नहीं, क्योंकि शरीर पांच भूतों से सृजित होने पर भी अन्य चार भूत पृथिवी के आधार पर ही टिके हैं। पृथिवी ही सबसे नजदीक है। इसलिये प्रथम स्थानापन्न पृथिवी को छोड़कर इससे आगे के जल और अग्नि आदि को लेने का कोई औचित्य नहीं है। अर्थात् मृत देह का पृथिवो तत्त्व में एकीकरण करने में जो औचित्य दोखता है, वह दहनादि में नहीं है।

उत्सर्गशास्त्र और अपवादशास्त्र नामक दो शास्त्र हैं। इन दोनों में अपवादशास्त्र ही बलशाली है, क्योंकि "अग्नीषोमीयं पशुमालभेत" (अग्नीषोम नामक याग से सम्बद्ध पशु का वध करना चाहिये) यही वाक्य वहाँ पर जैसे बलशाली होकर रहता है, वैसे ही यहाँ पर खनन वाक्य अपवादात्मक वाक्य होने से प्रबल हो जाता है। "मा हिंस्यात् सर्वा भूतानि" अर्थात् किसी प्राणी को कभी भी मारना नहीं चाहिये, यह सामान्य वाक्य जैसे वहाँ पर दुर्बल हो जाता है, वैसे ही यहाँ पर दहनविधायक वाक्य दुर्बल हो जाता है। इसका अभिप्राय यह है कि सोमयाग में संस्कार किये गये पशु को छोड़कर शेष सभी पशुओं में जैसे "मा हिंस्यात् सर्वा भूतानि" यह सामान्य शास्त्र प्रवृत्त होता है, वैसे ही लिंगांगी के मृत देह को छोड़ शेष सभी मृत देहों में दहनविधायक सामान्य शास्त्र का अनुसरण कर लेना चाहिये।

**कार्यः । न चोदाहृतश्रुत्या बोधितस्य खननस्य यतिविषयत्वमिति वाच्यम्, सर्वत्र शरीरमित्यादौ यतिवाचकपदाभावेनोभयत्र खननाचारानुरोधेनोभयसाधारण्येन खननविधायकश्रुतीनां सङ्कोचासहिष्णुत्वात्, उदाहृतश्रुतिस्मृत्यादौ लिङ्गाङ्गिब्राह्मणबोधकपदसत्त्वाच्चेति ।**

**किञ्च, भारतेऽनुशासनपर्वणि गौरीं प्रति शिववचनेन दहनखननोभयोरपि विहितत्वेन वेदतुल्यभारतबोधितखननस्य लिङ्गधारिब्राह्मणविषयत्वमावश्यकमेव। तथाहि– 'स्वभावमरणं नाम न तदात्मेच्छया भवेत् । तदा मृतानां यत्कार्यं तन्मे शृणु यथा तथा ।। भूमौ संवेशयेद् देहं नरस्य विनशिष्यतः । निर्जीवं**

---

योगाद् बोद्धव्यः। यतिविषयकत्वमपि न सम्भवति, यतिपदाभावात्।

**शंका**—ऐसा मानने की अपेक्षा हम इस प्रकार भी मान सकते हैं कि अभी तक उदाहरण के रूप में दिये गये वाक्य केवल संन्यासियों के निमित्त दिये गये वाक्य हैं ? ऐसा मानने में क्या कोई आपत्ति है ?

**समाधान**— मृतदेह का भूनिक्षेप करना है, ऐसा बताने वाले प्रमाणवचनों में संन्यासियों का निक्षेप करना है, इस अर्थ को बताने वाला कोई पद तो नहीं है, किन्तु लिंगांगियों के मृतदेह का जैसे भूनिक्षेप किया जाता है, वैसे ही संन्यासियों के मृतशरीर का भी भूनिक्षेप करते देखा जाता है। इसलिये यह खननविधान लिंगांगी एवं संन्यासियों में समान रूप से प्रचलित है । अतः यह खननविधि केवल संन्यासियों के निमित्त है और लिंगांगियों के निमित्त नहीं है, ऐसा कैसे कहा जाय ? इसके अतिरिक्त पूर्व में दिये गये श्रुति, स्मृति, आगम आदि के प्रमाणों में लिंगांगी देह के लिये भूखनन अर्थ को बताने वाले पद अनेक हैं ।

महाभारत के अनुशासन पर्व में भी बताया गया है कि मरण तो स्वाभाविक है । अपनी इच्छा से आने वाला नहीं है । मरे हुए व्यक्ति का कैसा संस्कार करना चाहिये, पार्वती के इस प्रश्न को निमित्त बना कर भगवान् परमेश्वर कहते हैं कि हे पार्वति ! मृत देह को चन्दनमाला और सोने से अलंकृत करके दक्षिण दिशा के श्मशान में ले जाकर चिन्ताग्नि में दहन करना चाहिये, अथवा उसका भूमि में निक्षेप करना करना चाहिये ।

श्रृणुयात् सद्योवासनात्तु कलेवरम् ।। माल्यगन्धैरलंकृत्य सुवर्णेन च भामिनि । श्मशाने दक्षिणे देशे चिताग्नौ प्रदहेन्मृतम् । अथवा निक्षिपेद् भूमौ शरीरं जीववर्जितम् ।।" इति । न चात्र दहनस्य ब्राह्मणविषयत्वं खननस्य जात्यन्तरविषयत्वमिति वाच्यम्, विनिगमकाभावेन वैपरीत्यापत्तेः । न च दहनस्य श्रौतत्वेन तदेव विनिगमकमिति वाच्यम्, खननस्याप्यनेकश्रुतिस्मृत्यादिबोधितस्य पूर्वमुपपादितत्वात् । "...लिङ्गं संयोग आश्रयः । तस्माल्लिङ्गाङ्गिसंयुक्तो योऽपि सोऽत्याश्रमी भवेत् ।। प्रथमः खननोपायो द्वितीयो दहनात्मकः । तृतीयोऽदर्शनोपायः स्वदेहं त्यक्तुमिच्छताम् ।। अदर्शनमिति श्रेष्ठमवियोगोऽङ्गलिङ्गयोः । तथैव खननं श्रेष्ठं विशुद्धे पृथिवीबिले ।। तयो-

---

**शंका**—यह समाधान ठीक ही है, क्योंकि यहाँ दहन और निक्षेप दोनों का समर्थन किया गया है । इसका मतलब यह हुआ कि द्विज के मृत देह का दहन करना चाहिये और शूद्र के मृतदेह का निक्षेप करना चाहिये । इस प्रकार की व्यवस्था जब हो गई है, तब तो लिंगधारी के मृत देह का भूनिक्षेप करना है, यह बात आप कैसे कह सकते हैं ?

**समाधान**—इसलिये कह सकते हैं कि दहन क्रिया ब्राह्मणों के निमित्त है और भूनिक्षेप शूद्रों के निमित्त, ऐसी व्यवस्था करने का मौका ही नहीं है, क्योंकि तब तो ऐसा भी हो सकता है कि ब्राह्मणों के निमित्त भूनिक्षेप है और शूद्रों के निमित्त दहन क्रिया । फिर जैसे दहन क्रिया श्रौत कर्म है, वैसे खनन क्रिया भी श्रौत कर्म है । शूद्रों को श्रौत कर्म का अधिकार न होने के कारण ब्राह्मणों के लिये जैसे दहन कर्म विहित है, वैसे ही लिंगधारियों के निमित्त खननकर्म विहित है, यह बात सिद्ध हो जाती है ।

वातुलागम में भी बताया गया है—"लिंग ही शिव है और अंग ही क्षेत्र है । अंग-लिंग का आश्रय ही संयोग है । इस प्रकार लिंगांगों से विशिष्ट व्यक्ति ही अत्याश्रमी है । अंग और लिंग का नित्य संयोग होने से इस लिंगांगी के मृत होने पर उस शरीर का विशुद्ध भूमि में निक्षेप करना ही श्रेष्ठ है" । वातुलागम की इस उक्ति से स्पष्ट हो जाता है कि लिंगांगियों के लिये श्रौत खनन

रभावे दहनं शिखिकर्पूरयोगवत् ।।" इति वातुलोत्तरतन्त्रानुरोधाच्चेति ।

अथैवमुक्तप्रणाल्या लिङ्ग्यलिङ्गिब्राह्मणानां सर्वेषामपि दहननिषेधे—"अर्थी समर्थो विद्वान् जातपुत्रः कृष्णकेशोऽग्नीनादधीत"(शा० भा० ६।१।५) इत्यादिवाक्यविहितसाधनसम्पन्नस्य ब्राह्मणमात्रस्य—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति

---

कर्म ही उत्तम माना जाता है, न कि दहन कर्म । इस विषय को स्पष्ट करने के लिये यहाँ वैदिक उदाहरण दिया जा रहा है । वेद में अग्न्याधान प्रकरण में बताया गया है कि जिसको अपेक्षा है, जो समर्थ है, जो विद्वान् है, जो सन्तान वाला है और जिसके बाल अभी काले हैं, वह अग्नि का आधान (ग्रहण) करे ।

अन्य वेद वाक्यों के अनुसार ब्राह्मण वसन्त ऋतु में, क्षत्रिय ग्रीष्म ऋतु में, वैश्य शरद् ऋतु में अग्नि का आधान करता है । आधान कर्म के कर्ता को उद्दिष्ट करके इस वाक्य में "जातपुत्रः कृष्णकेशः" इन विशेषणों का विधान किया गया है । इसलिये यहाँ पर वाक्यभेद नामक दोष प्राप्त होता है । उस दोष का परिहार करने के लिये "जातपुत्रः, कृष्णकेशः" इन दो पदों का लाक्षणिक अर्थ लेना चाहिये, ऐसा पूर्वमीमांसा शास्त्र में निश्चय किया गया है । यहाँ 'जातपुत्रः' का अर्थ है बालबच्चें वाला और 'कृष्णकेशः' का अर्थ है काले बाल वाला । इसका मतलब यह हुआ कि जो सन्तान वाला है और जो काले बाल बाला है, वह आधान कर्म का अधिकारी है । इससे जिसको बच्चे नहीं हैं और जिसके बाल सफेद हो गये हैं, वह आधान कर्म के योग्य नहीं है, ऐसा निश्चय किया जाता है । लेकिन इन दोनों पदों के शब्दार्थ को ग्रहण करने पर वाक्यभेद होना अवश्यम्भावी है । इसलिये एकवाक्यता दिखलाने के लिये इन दोनों पदों को मिलाकर लक्षणा वृत्ति से अवस्था ( उम्र ) विशेष को दिखाया जाता है कि इस प्रकार की अवस्था से विशिष्ट व्यक्ति ही अग्न्याधान का कर्ता हो सकता है । बाल्यावस्था में पुत्रोत्पत्ति नहीं हो सकती और वृद्धावस्था में बाल काले नहीं रह सकते । इसलिये उक्त पदों के लाक्षणिक अर्थ के आधार पर इन दोनों से विशिष्ट युवा व्यक्ति ही आधान कर्म का कर्ता हो सकता है, ऐसा निर्णय किया गया है । इसी प्रकार दहनविधि और खननविधि सभी के निमित्त होने पर भी प्रकृत में लिंगधारण रहित द्विजों एवं

**यज्ञेन दानेन तपसाऽनशनेन" (बृ० उ० ४।४।३२) इति श्रुत्यापादितब्राह्मणवेदसाधनीभूतयज्ञस्यावश्यकर्तव्यत्वेन—"कश्यपाऽत्रिभरद्वाजगौतमाद्या महर्षयः" इत्युदाहृतलिङ्गपुराणवचनविहितलिङ्गधारणवतामेव कश्यपादीनां शिवपुराणे वायवीयसंहितायां जटालिङ्गधारणनिरूपणप्रस्तावे आहिताग्नित्वप्रतिपादनादाधुनिकानामपि केषाञ्चित् पूर्वशैवानामुक्तसाधनवतामाहिताग्नित्वदर्शनात्। तेषामपि दहननिषेधप्राप्तौ—"आहिताग्निभिर्दहन्ति यज्ञपात्रैः" इति कल्पसूत्रविरोधः, तेन चाहिताग्निमात्रस्यावसाने वैतानाग्निहोत्रपात्रैः सह दहनविधानादिति चेत् ? मैवं मंस्थाः,**

---

"कश्यपात्रिभरद्वाजगौतमाद्या महर्षयः" इत्यादिना लिङ्गपुराणे कश्यपादिमहर्षीणां लिङ्गाङ्गसङ्गित्वमुक्तम्। शिवपुराणे वायवीयसंहितायां कश्यपादीनामाहिताग्नित्वमुक्तम्। तत्र का प्रक्रियाऽऽश्रयितव्येति विचारस्तु

स्त्रियों को छोड़कर अन्य सभी लिंगधारी स्त्री-पुरुषों के मृत शरीर के लिये खननविधि ही विहित है, ऐसा निश्चय कर लेना चाहिये। अन्य वेदवाक्य भी इसका समर्थन करते हैं। बृहदारण्यक उपनिषद् में बताया गया है कि ब्रह्मनिष्ठ होने की इच्छा वाले ब्रह्मशब्द वाच्य उस परमात्मा को वेदनिर्दिष्ट यज्ञादि कर्मों से, दान से, कृच्छ्र-चान्द्रायणादि तपस्या से और अनशनव्रत से जानने की चेष्टा करते हैं। इसका अभिप्राय यह है कि मोक्ष को चाहने वाले को यज्ञादि कर्मों का अवश्य अनुष्ठान करना चाहिये। वैसे ही लिंगधारी सभी वीरशैव स्त्री-पुरुषों के लिये यह आवश्यक है कि उनके मृत शरीर को भूनिक्षेप संस्कार द्वारा अवश्य संस्कृत किया जाय।

लिंगधारी कश्यप, अत्रि, भरद्वाज आदि महर्षियों का उल्लेख लिंगपुराण में मिलता है। शिवपुराण की वायवीय संहिता में जटा पर लिंगधारण करने वाले इन महर्षियों के प्रसंग में आहिताग्नियों के द्वारा विहित धर्मों को बताया गया है। इस प्रकार के आहिताग्नियों के मृत शरीर की दहनक्रिया का निषेध प्रसक्त होने पर—'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैः" अर्थात् यज्ञपात्रों के साथ आहिताग्नि को जलाना चाहिये, ऐसा कल्पसूत्र में कहा गया है। मनुस्मृति में यागशील की पत्नी यदि अकस्मात् मर जाती है, तो उस याग से सम्बद्ध सभी बर्तनों के साथ

"एवं मृतां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् । दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ।। भार्यायै पूर्वमारण्यै दत्वाऽग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात् पुनराधानमेव च ।।" (५।१६७-१६८) इति मनुस्मृत्या यज्वपत्न्याः प्रथमं मरणप्रसक्तौ यागीयाग्निहोत्रपात्रैः सह तस्या दहनविधानेन द्वितीयविवाहात् पूर्वमेव यज्वनोऽपि मरणप्रसक्तावग्निहोत्रपात्राणां पूर्वविनियुक्तत्वेन तद्विषये कल्पसूत्रविहितयागीयाग्निहोत्रपात्रकरणकदहनस्यानित्यत्वस्वीकारात् ।

न च कल्पसूत्रे यज्ञपात्रैर्वेति विकल्पविधानादरण्यादिव्यतिरिक्तपात्राग्निहोत्रैर्जायादहनेऽप्यरणिमथनयोः सत्त्वेन यज्वनो मरणप्रसक्तौ पुनरग्निमुत्पाद्यारण्यादिना सह दाहः

---

न कर्तव्यः, तेषामृषीणां कल्पान्तस्थायित्वेन तद्विचारे फलाभावात् । इतः परमपि संभावितानामाशङ्कानां निराकरणेन खननपक्षः शिवलिङ्गाङ्गिसङ्गिषु स्थापितः ।

उसका दहन करना चाहिये, ऐसा विधान किया गया है । अब दूसरी शादी होने से पहले वह यागशील व्यक्ति यदि मर जाता है, तो उसके पास रहने वाले सभी बर्तनों का तो पहले ही विनियोग हो गया है, तब तो कल्पसूत्र में बताये गये यागसम्बन्धी बर्तन ही नहीं रह जाते । उस अवस्था में साधन स्वरूप बताये गये अग्निहोत्र सम्बन्धी पात्रों के न रहने से उस दहन कर्म को अनित्य मानना होगा, क्योंकि साधन ही जब नहीं रह जाता, तो साध्य की सिद्धि कैसे संभव हो सकती है ?

**शंका**—कल्पसूत्र में तो "यज्ञपात्रैर्वा" ऐसा विकल्प बताया गया है । इससे यह अर्थ निकलता है कि यज्ञ से सम्बद्ध अरणि आदि को छोड़कर अवशिष्ट अग्निहोत्र पात्रों के साथ यागशील व्यक्ति की पत्नी के मृत शरीर का दहन करने पर भी अरणि आदि जो अवशिष्ट रहे हैं, उनसे यागशील व्यक्ति के मृत शरीर का दहन करना चाहिये । ऐसा अर्थ किये जाने पर जब दहन क्रिया में आसन्न अनित्यत्व नामक दोष का परिहार सम्भव है, तो अनित्यत्व दोष कैसे स्वीकार किया जा सकता है ?

क्रियत इति वाच्यम्, "यज्ञपात्रैश्च धर्मवित्" (५।१६७) इति मनुस्मृत्या किञ्चित्पात्रव्यतिरिक्तपात्रैर्दहनाप्रतीतेः, तथापि यागीयाग्निहोत्रेण यज्वनो दहनाभावेन कल्पसूत्रविहितकर्मानित्यत्वस्यापरिहाराच्च। किञ्च, "प्राजापत्यां निरूप्येष्टिं सर्वस्वेन सदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥" (६।३८) इति मनुस्मृत्याऽऽहिताग्नेर्विप्रस्य तुर्याश्रमस्वीकारसमयसमवधाने प्राजापत्येष्टिं निर्वर्त्याग्नीनामात्मारोपणं कृत्वा स्वगृहात् प्रव्रजेदिति विधानेन तस्य च—"सर्वकर्मनिवृत्तस्य ध्यानयोगरतस्य च" इत्यादिपूर्वोदाहृतवचनेन दहननिषेधवत् तद्विषयेऽप्यनित्यत्वाच्च।

न च संन्यस्तस्य यज्वनो दहनाभावेऽपि तत्पत्नीदेहावसानपर्यन्तं पात्राणि संगृह्यावसानकाले पात्रैः सह दहनं क्रियत

---

**समाधान**—ऐसी बात नहीं, क्योंकि "यज्ञपात्रैश्च धर्मवित्" ऐसा मनुस्मृति में कहा गया है। कुछ पात्रविशेषों को छोड़कर शेष सभी पात्रों से दहन करना चाहिये, वहाँ ऐसा वाक्य नहीं दिखता। अतः याग से सम्बद्ध यज्ञीय पात्रों के अभाव में पात्रों के साथ दहनविधान के लागू न होने से कल्पसूत्र में बताये हुए कर्मों के अनित्यत्व दोष का परिहार सम्भव नहीं है।

अपि च, आहिताग्नि ब्राह्मण के लिये जब संन्यास लेने का समय समासन्न हो जाता है, तब प्राजापत्य याग का सम्पादन करके वैदिक अग्नियों का आत्मा में समारोप करके घर अथवा मठ को त्यागकर संन्यास ले लेना चाहिये, ऐसा मनुस्मृतिकार कह रहे हैं। इस प्रकार संन्यास स्वीकार कर लेने पर "सर्वकर्मनिवृत्तस्य ध्यानयोगरतस्य च" इस वाक्य के अनुसार उस व्यक्ति के लिये दहन कर्म का निषेध किया गया है। इसलिये भी अनित्यत्व दोष का परिहार सम्भव नहीं है।

**शंका**—यह ठीक है कि यागशील व्यक्ति जब संन्यास ले लेता है, तब उसके निमित्त दहन क्रिया का निषेध लागू हो जाता है, किन्तु उसकी धर्मपत्नी के दहन के निमित्त जब यज्ञपात्र हैं, तब दहन क्रिया का कोई अवरोध न होने से दहन क्रिया नित्यविधि प्रयुक्त ही मानी जायगी।

एवेति वाच्यम्, "आहिताग्निमग्निभिर्दहन्ति" इति श्रुतपुल्लिङ्गतानिर्वाहायाहिताग्निपदस्य यज्वपरत्वेन तस्य दहनाभावेऽनित्यत्वापरिहारात्। न च लिङ्गव्यत्ययेनाहिताग्निपदस्य तत्पत्नीपरत्वमपि स्वीक्रियत इति वाच्यम्, यागोयाग्निहोत्रपात्रोभयकरणकदहनस्य तस्या अप्यभावेन कल्पसूत्रविहितकर्मणोऽनित्यत्वावश्यम्भावात्, देशकालवैपरीत्यादिना यज्ञपात्रविच्छेदे तत्सहभावेनापि दहनाभावात्; संन्यस्यद्यज्वाऽग्निहोत्रात्मारोपणसमकालमेव पात्राणां पृथग्दहनं कृत्वा संन्यस्यतीति पक्षे तत्पत्नीदेहावसानपर्यन्तं यज्ञपात्राभावाच्चेति।

अपि च—"गृहस्थस्तु यदा पश्येद् वपुः पतितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्। पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा॥ अग्निहोत्रं समादाय गृह्यं चाग्निपरिच्छदम्॥ ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः॥…वैतानिकं च

---

**समाधान**—आपकी यह बात उचित नहीं है। ऐसे अनित्यत्व दोष का परिहार नहीं हो पाता, क्योंकि "आहिताग्निमग्निभिर्दहन्ति" इस श्रुति में पुल्लिग का प्रयोग होने से आहिताग्नि पद उस यागशील व्यक्ति से सम्बद्ध है। इसलिये जब तक उसे न जलाना जाय, तब तक अनित्यत्व दोष का परिहार नहीं हो सकता।

**शंका**—ऐसा क्यों? श्रुति के आहिताग्नि पद के पुल्लिग होने पर भी लिंग का व्यत्यास करके उसका धर्मपत्नीपरक अर्थ कर ही सकने हैं?

**समाधान**—ऐसा नहीं कर सकते, क्योंकि यागसम्बन्धी अग्निहोत्र और बर्तन, इन दोनों साधनों से विशिष्ट दहनकर्म पत्नी का न होने से कल्पसूत्र में बताये हुए कर्म में अनित्यत्व दोष अवश्य ही मानना पड़ेगा। देश-काल की परिस्थितियों से यज्ञपात्रों के ध्वस्त होने पर तो उनके साथ उस व्यक्ति का दहन किसी हालत में भी नहीं हो सकता। संन्यास ग्रहण की इच्छा वाला यागशील व्यक्ति अग्निहोत्र को आत्मारोपित करते समय उन बर्तनों को अलग से जला कर संन्यास ग्रहण कर सकता है, ऐसा विकल्प भी नहीं किया जा सकता, क्योंकि उसकी पत्नी जब तक रहेगी, तब तक उन यज्ञपात्रों का परित्याग नहीं किया जा सकता।

जुहुयादग्निहोत्रं यथाविधि ॥" ( म० स्मृ० ६।२-४,९ ) इति स्मृत्या यज्वनस्तदन्यस्य वा गृहस्थस्य—"ब्रह्मचारी गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत्" इत्याश्रमक्रमविधायकवाक्यविहितवानप्रस्थाश्रमसमयबन्धे स्वयमाहिताग्निश्चेत् प्राजापत्येष्टिं कृत्वात्मन्यग्नीनारोप्य पुत्रादौ भार्यां निवेश्यारण्यप्रवेशं कुर्यात् । यद्वा वानप्रस्थस्याग्निहोत्रादिकर्माधिकारस्य विद्यमानत्वेन वैतानाग्निहोत्रपात्रादिकं परिगृह्य भार्यया सहैव वनं गत्वा वन्यवृत्त्यैव जीवन्नग्निहोत्रादिसकलकर्मानुष्ठानमाचरन्नेव निवसेदित्यभिहितत्वेन वानप्रस्थस्य यज्वनो देहावसानप्रसक्तौ—"वानप्रस्थं योगिनं च लिङ्गैक्यं भिक्षुकं यतिम्" इत्याद्युताहृतशातातपस्मृत्या तस्य खननविधानेन कल्पसूत्रविहितयागीयाग्निहोत्रपात्रकरणकदहनस्य नित्यत्वाभावाच्च ।

न च तस्य दहनाभावेऽपि तत्पत्नीदेहावसानपर्यन्तं पात्रादिकं संस्थाप्य तैः सह क्रियत इति वाच्यम्, पत्नीसहभावेनै-

---

पुनश्च, स्मृतिकारों का कहना है कि ब्रह्मचारी गृहस्थाश्रम को, गृहस्थ वानप्रस्थाश्रम को, वानप्रस्थ संन्यासाश्रम को स्वीकार करे । वानप्रस्थाश्रम को स्वीकार करते समय उस व्यक्ति के आहिताग्नि होने पर उसे प्राजापत्येष्टि का सम्पादन करके अपने में अग्नि को समारोपित कर अपनी पत्नी को पुत्रों के साथ छोड़कर अरण्य में प्रवेश करना चाहिये । अथवा वैकल्पिक व्यवस्था के अनुसार जब तक वानप्रस्थाश्रम में रहता है, तब तक अग्निहोत्रादि वैदिक कर्म करने का अधिकार होने से अग्निहोत्र से सम्बद्ध पात्रों को लेकर पत्नी के साथ जंगल में जाकर कन्द-मूल-फलों को खाकर जीवित रहने का विधान है । उस यागशील वानप्रस्थ के शरीर छोड़ने का जब समय आता है, तब पूर्वोक्त शातातप स्मृति के अनुसार उस प्रकार के वानप्रस्थ के लिये खनन (निक्षेप) करने का विधान होने से कल्पसूत्र के अनुसार याग से सम्बद्ध अग्निहोत्र के पात्रों के साथ दहन कर्म न होने से उक्त विधि में अनित्यत्व दोष रह ही जाता है ।

**शंका**—ऐसे व्यक्ति की दहनक्रिया न होने पर भी उनकी पत्नी जब तक न मरेगी, तब तक उन पात्रों की रक्षा करती रहेगी, तो उन पात्रों के साथ उसकी

**वाश्रमस्वीकारेण तस्या अपि वानप्रस्थत्वेन दहनायोगात् । तर्हि वैतानपात्राणां का गतिरिति चेत् ? अग्निहोत्रेण पात्राणां पृथग् दहनम्, वानप्रस्थपत्नीशरीरस्य खननमेव कार्यमिति गृहाण । अस्तु वा वानप्रस्थपत्न्या दहनम्, तथापि यजमानातिक्रमे वैतानाग्नेरभावेन पात्राणां देशकालवैपरीत्येन विच्छेदे लौकिकाग्निना दहनेऽपि सूत्रविहितकर्मानित्यत्वस्य वज्रलेपायितत्वमेव ।**

**ननु कल्पसूत्रविहिताग्निदहनस्य श्रौतत्वेन बलवत्त्वान्न शातातपादिस्मृत्या तस्यानित्यत्वकथनं युक्तमिति चेन्न, श्रुतावपि तस्यानित्यत्वबोधनात् । तथा च—"येऽग्निदग्धा येऽनग्निदग्धा ये वा जाताः कुले मम । भूमौ दत्तेन पिण्डेन**

---

दहनक्रिया क्यों नहीं हो सकती ? इससे दहनक्रिया के नित्यत्व को कौन रोक सकता है ?

**समाधान**—नित्यत्व इसलिये सम्भव नहीं है कि पत्नी भी वानप्रस्थाश्रम स्वीकार कर चुकी है । इसलिये उसकी धर्मपत्नी को भी जलाने का विधान नहीं है । तब उस याग से सम्बद्ध पात्रों की क्या गति होगी ? उन पात्रों को अलग से जला देना चाहिये, वानप्रस्थ की पत्नी के मृत शरीर को खनन करना चाहिये, यदि ऐसा निर्णय किया जाता है, तो होने दीजिये । इससे भी दोष का परिहार नहीं होगा । वानप्रस्थ की पत्नी का दहन कर्म ही करना चाहिये, ऐसा कहें तो यजमान के न होने पर वैतानिकाग्नि ही नहीं रह जाती । ऐसी अवस्था में तथा बर्तनों के देश-काल के वैपरीत्य से विच्छिन्न हो जाने पर भी लौकिकाग्नि से दहन क्रिया का सम्पादन कर लेना होगा । तब कल्पसूत्रों में बताये हुए कर्मों का अनित्यत्व दोष पहले की अपेक्षा वज्रतुल्य होकर रह जायगा ।

**शंका**—कल्पसूत्रों में प्रदर्शित अग्नि से दहनक्रिया के श्रौत कर्म होने से और शातातप आदि स्मृतियों में प्रदर्शित खननकिया की अपेक्षा प्रबल होने से उस प्रकार के खननविधायक वाक्य ही अनित्य हो सकेंगे, न कि दहनविधायक वाक्य । अतः दहनविधायक वाक्यों के नित्य होने में सन्देह ही क्या है ?

तृप्ता यान्तु परां गतिम् ॥" इति पिण्डप्रदाने श्रूयते । अत्र चानग्निदग्धकोटिप्रविष्टत्वमाहिताग्नीनामप्यस्ति । न चात्र— "न्यूनं द्विवार्षिकं बालं निधने न तु दाहयेत्" इति बालानां दहननिषेधात् तेषामेवानग्निदग्धकोटौ प्रवेश इति न सूत्रविहिताग्निदहनानित्यत्वमिति वाच्यम्, "असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः । दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥" इति तेषां पृथक्क्लृप्तिविधानात् । नापि यतीश्वराणामनग्निदग्धकोटिप्रवेशः, "न तस्य दहनं कार्यं न च पिण्डोदकक्रिया । एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन ॥" इति शौनकस्मृत्या यतीश्वराणां पिण्डप्रदाननिषेधात् । नापि जात्यन्तराणां प्रवेशः, शूद्राणां वेदमन्त्रेण विधानायोगेन—"यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः"

---

**समाधान**—लेकिन श्रुति में भी अनित्यत्व दोष बताया गया है। जैसे कि "येऽग्निदग्धाः" इत्यादि मन्त्र पिण्डप्रदान करते समय कहा जाता है। यहाँ पर आहिताग्नियों का अग्नि से दाह संस्कार नहीं करना चाहिये, ऐसा बता कर अनग्निदग्ध (निक्षेप) कोटि का विधान किया गया है।

**शंका**—ऐसा नहीं हो सकता, क्योंकि दो साल जिसको पूरा नहीं हो पाया है, ऐसे बच्चों का दाह संस्कार नहीं करना चाहिये। इस प्रकार निषेध होने से उस अवस्था के बालक के मर जाने पर निक्षेप करने का विधान कल्पसूत्र में भी है। अतः दहन कर्म में अनित्यत्व दोष जैसे का तैसा रह जाता है।

**समाधान**—नित्यत्व सम्भव नहीं है, क्योंकि "असंस्कृतप्रमीता ये" इत्यादि विधान में ऐसे लघु बालकों के इस नियम के अन्तर्गत न होने से दहन विधायक वाक्यों में अनित्यत्व दोष स्वीकारना ही होगा।

**शंका**—तब तो संन्यासियों का दाह संस्कार न होने से उनको अनग्निदग्ध कोटि में मान लेंगे।

**समाधान**—नहीं, क्योंकि शौनकस्मृति में संन्यासी के निमित्त दहनसंस्कार पूर्वक पिण्डप्रदान का निषेध किया गया है। इसलिये संन्यासियों को अनग्निदग्ध कोटि के अन्तर्गत नहीं ले सकते। अग्निदग्ध एवं अनग्निदग्ध इन दोनों

**इत्यादिपुराणवचनैरेव तृप्तिविधानादिति। अतः परिशेषप्रमाणेन देशान्तरे विजनप्रदेशमृतानामपुत्रकाणां कर्त्राद्यभावेनाग्निसंस्काराभाववतां यजमानकुलोद्भवानामाहिताग्नीनामनाहिताग्नीनां वा गृहस्थानामरण्यादिप्रविष्टानां देहावसाने खननक्रियायामुक्तानामाहिताग्निवानप्रस्थानां चानग्निदग्धकोटौ प्रवेशः कार्य इति। एवं च कल्पसूत्रादिविहिताग्निदहनस्यानित्यत्वसिद्धौ लिङ्गधारिद्विजानामुदाहृतानेकश्रुतिस्मृत्यादिकदम्बेन खननक्रियाविधानादाहिताग्नीनामपि तेषां देहावसानपूर्वकाले प्राजापत्येष्टिं कृत्वात्मन्यग्नीनारोप्य मृतानां खननक्रियैव कर्तव्या, तत्पत्नीनामप्यवसाने पात्राणां पृथग् दहनं कृत्वा खननमेव कर्तव्यमित्यवगन्तव्यम्।**

**किञ्च, मार्गशैवानां ( पूर्वशैवानां ) दहनकरणे खननाकरणे च प्रत्यवायविधानादाहिताग्न्यनाहिताग्निसाधारण्येन**

---

के लिये पिण्डप्रदान का विधान किया गया है। ऐसे ही—"यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः" इस प्रमाणवचन के आधार पर शूद्रों के लिये वेदोक्त कर्माधिकार न होने से उस प्रकार का पिण्डदान न कराकर केवल अन्न से दास और दासियों को तृप्त करने का विधान होने से शूद्रों का भी अनग्निदग्ध कोटि में प्रवेश नहीं करा सकते। अन्त में परिशेष न्याय का अनुसरण करते हुए जो भिन्न देश में या विजन प्रदेश में मृत हो, जिसके बाल-बच्चे न हों, अथवा अपनानेवाला कर्ता न हो, ऐसे लोगों को और यजमान के कुल में उत्पन्न आहिताग्नि हो या अनाहिताग्नि हो, अरण्य में प्रविष्ट गृहस्थ हो, खनन विधि में बताये गये आहिताग्नि व वानप्रस्थ का अवसान प्राप्त होने पर उनके निमित्त अग्नि संस्कार (दहन) न करने के कारण इन सबका अनग्निदग्ध कोटि में प्रवेश करना चाहिये। इससे कल्पसूत्रों के द्वारा विहित दहनक्रिया अनित्य सिद्ध हो जाती है।

जो लिंगांगी वीरशैव हैं, उनके निमित्त पहले निरूपित श्रुति, स्मृति आदि के अनेक प्रमाणों से खनन विधि ही बताई गई है। जो आहिताग्नि प्राजापत्येष्टि का सम्पादन करके वैदिक अग्नियों को आत्मा में समारोपित करके शरीर को छोड़ते हैं, उन लोगों के निमित्त भी खनन विधि ही बताई गई है। इसके

तद्विषये दहनविधायकसकलवाक्यानामपि संकोच एवाङ्गीकरणीयः। तदुक्तं सदानन्दोपनिषदि—"शिवलिङ्गधरं विप्रं विपन्नं तु न दाहयेत्। यदि वा दाहयेत् तस्य ब्रह्महत्या तदा भवेत्॥" (१२) इति। स्कान्दे—"मृतलिङ्गाङ्गिनो देहमज्ञानाद् दहते यदि। शिवालयसहस्राणां दाहदोषमवाप्नुयात्॥ यदीच्छेद् दहनं तत्र शिवाग्नौ तन्निवेदयेत्। तत्रापि लिङ्गकायस्य दहनं तु विवर्जयेत्॥" इति। पद्मपुराणे—"सर्वाश्रमातिरेकेण भवेदत्याश्रमी द्विजः। लिङ्गाङ्गो यदि वा मुक्तो दग्धुं नार्हति कर्मणा॥" इति। वायवीयसंहितायाम्—"षडध्वशुद्धिं विधिवत् प्राप्तो वा म्रियते यदि। पशूनामिव तस्येह न कुर्यादौर्ध्वदैहिकम्॥" इति। शिवधर्मशास्त्रे—"यः प्राणलिङ्गसंल्लग्नो लिङ्ग-

---

अतिरिक्त यज्ञ-पात्रों को अलग-अलग से जलाने के बाद उस यागशील व्यक्ति की पत्नी के अवसान में खनन का ही विधान किया गया है। इसी प्रकार मार्गशैवों के लिये खनन कर्म को छोड़कर दहन करना दोषावह माना जाता है। इसलिये आहिताग्नि व अनाहिताग्नि इस प्रकार के मार्गशैवों के विषय में दहन के विधान करनेवाले सभी वाक्यों के अर्थ का संकोच करना ही है। और भी—"जो लिंगधारी होता है, उसकी अन्त्य क्रिया में जो कठिनाइयां हों, किसी भी हालत में खनन कर्म ही करना है, न कि दहन कर्म। प्रमादवश दहन करने पर ब्रह्महत्या का दोष लगता है"। इस प्रकार सदानन्दोपनिषत् में कहा गया है। इसी सन्दर्भ में स्कन्दपुराण में भी कहा गया है कि लिंगधारी वीरशैवों के मृत शरीर को अज्ञान से जलाने पर एक हजार शिवालयों को जलाने का दोष लगता है। उनकी देह को जलाने की इच्छा होने पर शिवाग्नि में निवेदन करे। अपने अंग में जिसने लिंग को धारण कर रखा है, उसका कभी भी दहन नहीं करना चाहिये। पद्मपुराण का भी कहना है कि सभी आश्रमों को अतिक्रमण करके जो अत्याश्रम को स्वीकार करते हैं, ऐसे लिंगधारी यदि मुक्तात्मा हों, तो उनके मृत देह का दहन नहीं करना चाहिये। वायवीयसंहिता कहती है कि वर्णाध्व, पदाध्व आदि षडध्वशोधन संस्कार पूर्वक जो शिवलिंगधारी हुआ है, शरीर को छोड़ देने पर उसके पशुकर्मोपाधि के निमित्त दहनपूर्वक और्ध्वदैहिक कर्म नहीं करना चाहिये।

प्राणी वियुज्यते। शरीरदहनात् तस्य नरके कालमक्षयम् ॥ भस्मोद्धूलितसर्वाङ्गमापादतलमस्तकम्। रोम रोम भवेल्लिङ्गं तद्देहं दाहवर्जितम् ॥ योगाग्निप्लुष्टकायस्य त्वात्मलिङ्गेष्ट-लिङ्गयोः। संयोगान्मोक्षकाले तु मुमुक्षोः सा तनूः शिवा ॥ यदङ्गं तु मृतं दृष्टं निक्षिपेत् तत्तु लिङ्गिनः। तद्देहदहनाद् घोरं रौरवं नरकं व्रजेत् ॥ प्राणलिङ्गवतां पुंसां लिङ्गप्राणवतां तनोः। प्राप्ते मरणकाले तु न कुर्याद् दहनं बुधः ॥ अज्ञानाद् दहनं कृत्वा नरकं वाधिगच्छति ॥" इति। वीरागमे—"कोटिशैवालयं दग्धं शिवभक्तं दहेद् यदि। दहन्नज्ञानयोगेन ब्रह्महत्यामवाप्नुयात ॥ लिङ्गदेहिशरीरस्य लिङ्गसंस्कार-वर्जितः। कुर्याच्चेद् वह्निसंस्कारमुभयोर्नरके क्षयः ॥ यः प्राण-लिङ्गनिक्षिप्तो निक्षिपेत् तं तु लिङ्गिनम्। तद्देहदहनाद् घोरं रौरवं नरकं व्रजेत् ॥" इति। शिवरहस्यखण्डे—"रुद्ररूपः

---

शिवधर्मशास्त्र में बताया गया है कि प्राण में लिंग का और लिंग में प्राण का समावेश करने वाले लिंगधारी के मृत होने पर उसके लिंगदेह का दहन नहीं करना चाहिये। अज्ञानवश दहन करने पर चिरकाल पर्यन्त नरक का अनुभव करना पड़ता है। पाद से लेकर मस्तक पर्यन्त सभी अंगों में भस्म का लेपन करके रोम-रोम जिनका लिंगमय बन गया है, उनके देह का दहन नहीं करना चाहिये। योगाग्नि से दग्ध शरीरवाले तथा इष्टलिंग और ज्योतिर्लिंग संयोग को प्राप्त किये हुए मुमुक्षु लिंगांगी के मर जाने पर उसके देह का भूमि में निक्षेप कर देना है, न कि दहन।

वीरागम में बताया गया है कि लिंगांगी शिवभक्त को जलाना करोड़ों शिवालयों के जलाने के समान है। प्रमादवश शिवभक्त को जलाने वाला ब्रह्महत्या के दोष का भागी होता है। लिंगदेही के मृत शरीर को जलाने वाला यदि संस्कारहीन है और जो प्रमाद से जलाने वाला है – इन दोनों को नरक की प्राप्ति होती है। प्राणलिंग को धारण किये हुए शिवलिंगधारी का भूमि में निक्षेप न कर जो दहन करता है, वह घोर नरक को प्राप्त करता है। शिवरहस्य खण्ड

शिवज्ञानी सर्वाङ्गे लिङ्गसङ्गिनः। कर्ममन्त्रेण दहनान्नरकः कालमक्षयम् ।। लिङ्गं भूतिं च रुद्राक्षं ये देहे धारयन्ति च। सर्वाङ्गलिङ्गसंयुक्तं तद्देहं शिवमुच्यते ।। तद्देहं दहते कर्मी नरकः कालमक्षयम् ।।" इति।

एवं च—"यावज्जीवमग्निहोत्रं जुहुयात्", "अहरहः सन्ध्यामुपासीत", "स्नानं सन्ध्या जपो होमः स्वाध्यायः पितृतर्पणम्। आतिथ्यं वैश्वदेवं च सत्कर्माणि दिने दिने ।। दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमाहरन् ।।" इत्यादिवाक्यविहिताकरणे प्रत्यवायजनकयावज्जीवकर्तव्यनित्यनैमित्तिकादिसकलकर्माणि परित्यज्य—"अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्। देवरेण सुतोत्पत्ति कलौ पञ्च विवर्जयेत् ।।" इति वैधनिषेधसत्त्वेऽपि लिङ्गधारणरहितब्राह्मणानां यागगङ्गास्नानान्नदानादितत्तत्सत्कर्मानुष्ठानानन्तरं गार्हस्थ्यं परित्यज्य यत्याश्रमस्वीकारे गृहस्थाश्रमकृततत्तत्सत्कर्मजनि-

---

में बताया गया है कि सर्वलिंगसंयोगी रुद्रस्वरूप शिवज्ञानी का जो दहन करता है, वह घोर नरक को प्राप्त करता है। लिंग, भस्म और रुद्राक्ष को जो धारण करते हैं, वे सर्वांगलिंगसम्बन्धी कहे जाते हैं। उनके मंगलमय देह को जलाना नहीं चाहिये। जो जलाता है, वह दीर्घकाल पर्यन्त नरक को प्राप्त करता है।

**शंका**—जब तक द्विज रहता है, तब तक अग्निहोत्र करता ही है। वह प्रतिदिन सन्ध्या भी करता है। इसके अतिरिक्त स्नान, सन्ध्या, जप, होम, स्वाध्याय, पितृतर्पण, आतिथ्य और वैश्वदेव आदि नैमित्तिक कर्म भी करता है। पितरों का आशीर्वाद प्राप्त करने के लिये प्रतिदिन श्राद्ध भी करता है। इन सभी का अनुष्ठान न करने पर दोष का भागी होता है, ऐसा धर्मशास्त्रों में बताये जाने पर भी इन सभी नैमित्तिक कर्मों को छोड़कर तथा—"घोड़े की यज्ञ के निमित्त बलि देना, गाय की बलि देना, संन्यास लेना, मांस का तर्पण करना और देवर से सन्तान प्राप्त करना यह—पाँच कर्म कलियुग में नहीं करना चाहिये" इस निषेध को ध्यान में न रखकर गृहस्थ धर्म को छोड़कर जो शास्त्रनिषिद्ध संन्यास को

तापूर्वं तदात्मनि वर्तते न वा ? आद्ये, आशुतरविनाशिनो यागादेः कालान्तरभाविस्वर्गजनकत्वान्यथानुपपत्त्या कल्पितापूर्वस्य कर्माधीनलोकप्राप्तिहेतुत्वेन संन्यस्तानामपि तदङ्गीकारे सायुज्यमुक्त्यर्थं संन्यास इति सिद्धान्तवाक्यानुपपत्तिः। न च निष्कामनाकृतकर्मानुष्ठानस्य मुक्तिप्रयोजकत्वेन स्वर्गकामो यजेतेत्यत्र स्वर्गपदस्य—"यन्न दुःखेन संभिन्नं च न ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥" इत्यादिवाक्यबोधितस्वःपदवाच्यनित्यसुखस्वरूपमोक्षवाचकत्वेन यत्यात्मनि गार्हस्थ्यकृतकर्मजनितापूर्वसत्त्वेऽपि न मुक्तिहानिरिति वाच्यम्, तर्हि निष्कामनाकृतकर्मानुष्ठानेनैव मोक्षसिद्धौ यावज्जीवकर्तव्यतत्तत्कर्मत्यागपूर्वकमाश्रमस्वीकारे प्रयोजनाभावात्।

---

स्वीकार करते हैं, उनमें पूर्वाश्रम में किये गये पुण्य कर्मों का अपूर्व रहता है, या नहीं ? इस प्रकार के दो विकल्प उठते हैं। हमारा कहना है कि संन्यास स्वीकार करने पर भी पूर्वकृत कर्मजन्य अपूर्व रहता है। जैसे कि पहले किये हुए सभी याज्ञिक क्रियाकलापों के नष्ट हो जाने पर भी कालान्तर में जब तक स्वर्ग का फल प्राप्त नहीं होता, तब तक अपूर्व उस आत्मा में सुस्थिर रहता है और देहपतन के बाद कर्म के अनुगुण फल को प्राप्त करा देता है। ऐसी स्थिति में सर्वकर्मसंन्यास पूर्वक जब संन्यास ग्रहण किया जाता है, तब "सायुज्यसिद्ध्यर्थं संन्यासः" इस सिद्धान्त के अनुसार संन्यासियों को प्राप्त होने वाले मोक्ष की प्राप्ति कैसे हो सकती है ?

**समाधान**—फलापेक्षा से रहित होकर किये हुए कर्म मुक्ति के प्रापक हैं। इसलिये "स्वर्गकामो यजेत" इस वाक्य का स्वर्ग पद नित्य सुख स्वरूप मोक्ष नामक अर्थ को व्यक्त करता है। अतः संन्यासी की आत्मा में गृहस्थाश्रम में अनुष्ठित ज्योतिष्टोम आदि यागों से सम्प्राप्त अपूर्व के होने पर भी वह अपूर्व मोक्ष का प्रतिबन्धक नहीं हो सकता। इसलिये किसी प्रकार की अपेक्षा को न रखकर जब कर्मानुष्ठान किया जाता है, तब उससे मोक्ष की प्राप्ति हो ही जाती है। इस

न च—"नान्यत्र कर्मसन्त्यागान्मोक्षं विन्दन्ति मानवाः", "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (तै० आ० १०।१०।३) इत्यादिना कर्मसंत्यागेनैव मोक्षप्रदर्शनेन यत्याश्रमस्वीकार आवश्यक एवेति वाच्यम्, तादृशवाक्यानाम्—"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे० उ० ३।८), "तरति शोकमात्मवित्" ( छा० उ० ७।१।३ ), "ज्ञानादेव तु कैवल्यम्" इत्याद्यनुरोधेन ज्ञानस्य साक्षाद्धेतुत्वबोधनात् तद्द्वारा कर्मणां मुक्तिहेतुत्वं न साक्षादित्यत्र तात्पर्यम्, न तु ज्ञानद्वारा तद्धेतुत्वं नास्तीत्यत्रेति । अन्यथा—"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥" इति, "अभ्यासात् तस्य विज्ञानं कैवल्यं लभते नरः । धर्मात् सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥", "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" (भ०गी० ३।२०), "न्यायार्जितधनो विद्वांस्तत्त्वनिष्ठोऽतिथिप्रियः । श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥",

---

अवस्था में जीवनकाल पर्यन्त किये जाने वाले नित्य, नैमित्तिक आदि कर्मों को छोड़कर अत्याश्रम स्वीकार करने की कोई जरूरत नहीं है ।

**शंका**—संन्यास की आवश्यकता तो है ही, क्योंकि "कर्म का त्याग करने से ही मोक्ष की सिद्धि होती है" ऐसा प्रमाण वचन होने से संन्यास को स्वीकार करने का प्रयोजन तो है ही । तब संन्यास की जरूरत क्यों नहीं है ?

**समाधान**—उस प्रकार के कर्मत्याग पूर्वक संन्यास को बताने वाले "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय", "तरति शोकमात्मवित्", "ज्ञानादेव तु कैवल्यम्" इस प्रकार के श्रुतिवाक्य मोक्ष का साक्षात्कार ज्ञान से होता है ऐसा बोध कराते हैं । कर्म तो केवल ज्ञान का हेतु है, न कि मोक्ष का साक्षात् हेतु । अन्य भी अनेक वचन हैं, जो ज्ञान के द्वारा ही कर्म को मुक्ति का कारण मानते हैं । यदि संन्यास न माना जाय, तो ऐसे स्पष्ट वचनों का विरोध होगा ।

"काश्यां तु मरणान्मुक्तिः" इत्यादिवाक्यविरोधापत्तेः, तादृशवाक्यानां ज्ञानद्वारा कर्मणां मुक्तिजनकत्वबोधकत्वात् ।

द्वितीये तत्तत्कर्मजनितापूर्वस्य फलोदयपर्यन्तावस्थायित्वप्रतिपादकसिद्धान्तव्याघातापत्तिः । किञ्च, वशिष्ठविश्वामित्रादीनां नित्यनैमित्तिकादिसकलकर्मानुष्ठानव्यग्राणामेव जीवन्मुक्तिदशापन्नत्वेन मुक्त्यर्थं संन्यासाश्रयणायोगाच्चेत्यादि यौक्तिकबाधसत्त्वेऽपि—"तत्त्वस्य श्रवणं कुर्यात्", "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः" ( तै० आ० १०।१०।३ ) इत्यादिवाक्यानुरोधेन शङ्कराचार्यैः कलिसन्धौ शपथशतसाधितत्वेन चतुर्थाश्रमोऽङ्गीक्रियते । यथा च ब्राह्मणमात्रस्य पितृमेधादिपठितानेकमन्त्रैर्दहनविधानेऽपि—"स्नात्वा गृहस्थः शुद्धात्मा यतेः संस्कारमाचरेत् । शिष्यैश्च चिरमालोक्य गन्धपुष्पैरलङ्कृतम् ।। नृत्यगीतादिकैश्चापि कुङ्कुमाद्यैः कुशोदकैः । पोषितं जयशब्देन दुन्दुभिध्वनिना तदा ।। दिशं प्राचीमुदीचीं वा

---

इसके अतिरिक्त कर्मजन्य अपूर्व आत्मा में नहीं रहता, यह जो दूसरा पक्ष है, इसको मानने पर यज्ञयागादि कर्मों से उत्पन्न होने वाला अपूर्व बीच में नष्ट न होकर फलप्रदान करने लिये स्थिर रहता है, ऐसा मानने वाले वाले सभी सिद्धान्त व्यर्थ हो जाते हैं। इतना ही नहीं, वशिष्ठ, विश्वामित्र आदि महर्षि नित्य, नैमित्तिक आदि कर्मों का विधि के अनुसार अनुष्ठान करते हुए ही जीवन्मुक्त हो गये हैं। इन्होंने मुक्ति के निमित्त कर्म का त्याग करके संन्यासाश्रम को नहीं स्वीकारा है। इस प्रकार की उक्तियाँ यद्यपि संन्यासाश्रम के विरुद्ध पड़ती हैं, तो भी "तत्त्व का श्रवण करे", "वेदान्त का श्रवण कर संन्यासी योगाभ्यास से पवित्र होकर तत्त्व का साक्षात्कार करता है" इन वेदवचनों के अनुसार श्रीशंकराचार्य ने भी संन्यास को ग्रहण किया था। अतः कलि के सन्धिकाल में चतुर्थ संन्यासाश्रम को अवश्य ही स्वीकारना पड़ेगा।

उपर्युक्त विवेचन से यह स्पष्ट हो जाता है कि जैसे ब्राह्मण मात्र का पितृमेध प्रकरण पठित मन्त्रों से दहन का विधान है, उसी तरह से आंगिरसस्मृति, मनुस्मृति सूतसंहिता आदि के—"गृहस्थ को स्नानादि से परिशुद्ध होकर संन्यासी के मृत देह का संस्कार करना चाहिये। उस संन्यासी के देह को गन्ध, पुष्प आदि से अलंकृत

**गत्वा तत्र खनेद् बुधः। विशुद्धे तु क्षितेर्गर्ते शरीरं निक्षिपेद् यतेः ॥" इत्याङ्गिरसोक्तप्रकारानुरोधेन, "यतीनां मरणे प्राप्ते स्पृष्टयादिर्नैव विद्यते। अशौचबुद्धया स्नातश्चेद् दिक्षु यात्रां व्रजेन्नरः ॥ ज्ञातिपुत्रकलत्राणां परिव्राड्मरणं यदि। अशौचं नास्ति तेषां वै स्नानमप्याचरेन्न तु ॥ मृतौ न दहनं कार्यं परहंसस्य सर्वदा। कर्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥ अन्येषामपि भिक्षूणां खननं पूर्वमाचरेत् ॥" इत्यादिमनुस्मृतिसूतसंहितावचनानुरोधेन च तेषां खननादिकमप्यङ्गीक्रियते, तथैव च महापाशुपतानां लिङ्गाङ्गसामरस्यज्ञानवतां लिङ्गधारिणामप्यवसाने खननस्यानेकश्रुतिस्मृतिपुराणादिविहितत्वेन पितृत्वादिप्राप्तिद्वारा भाव्युपयोगिदहनस्य प्रेतकृत्यस्य प्रागुक्तरीत्या तेषामनपेक्षितत्वेन च भूतोपयोगिखननक्रियैव कर्तव्येति युक्तमुत्पश्यामः।**

---

करके वाद्य-घोषों के साथ उत्तर अथवा पूरब दिशा में ले जाकर परिशुद्ध भूमि में गर्त का निर्माण करके उस शरीर का निक्षेप कर देना चाहिये", "मृत यतियों के बारे में अस्पृश्यादि दोष नहीं है। यदि कोई व्यक्ति अस्पृश्य भावना से स्नान आदि करता है, तो प्रायश्चित्त के रूप में दिशाओं में यात्रा करने का विधान किया गया है। संन्यासी की मृत्यु होने पर उनके बच्चों को, दायादों को, रिस्तेदारों को अशौच दोष नहीं लगता। अतः स्नान करने की आवश्यकता नहीं है। परमहंस की मृत्यु होने पर उनके शरीर को नहीं जलाया जाता। निश्चय ही भूनिक्षेप कर देना चाहिये और श्राद्ध कर्म भी नहीं करना चाहिये। विभिन्न भिक्षुओं के निमित्त भी खनन विधान का ही अनुसरण करना चाहिये"। इन प्रामाणिक वचनों के आधार पर संन्यासी के लिये दहन का विधान न होकर खनन ही शास्त्रविहित है। उसी प्रकार लिंगांग सामरस्य सिद्धि को प्राप्त महापाशुपत नामक लिंगधारी के शरीर को छोड़ देने पर उस लिंगदेह का भूनिक्षेप करने के पक्ष में अनन्त श्रुति, स्मृति, पुराण आदि के वचन उपलब्ध हैं, अतः लिंगांगियों के पितृत्वादि सिद्धि के लिये दहनकृत्यपूर्वक प्रेतकृत्य की अपेक्षा न करके मोक्षोपयोगी भूनिक्षेप ही करना है, न कि दहन क्रिया।

इयांस्तु विशेषः—मार्गशैवानां (पूर्वशैवानां) यावज्जीवपर्यन्तनित्यनैमित्तिकादिसकलकर्मानुष्ठानमाचरतामेवावसानप्राप्तावाहिताग्निश्चेन्मरणाव्यवहितपूर्वकाल एव प्राजापत्येष्टयाग्नीनामात्मारोपणं विधाय खननं क्रियते, अनाहिताग्निश्चेच्छैवतन्त्रोक्तरीत्या तत् क्रियते। अलिङ्गिब्राह्मणानां तु केषाञ्चिद् यावज्जीवकर्तव्याकरणप्रत्यवायजनकनित्यनैमित्तिकादिसकलकर्मानुष्ठानपरिहारपूर्वकमाश्रमान्तरस्वीकार इति।

अत एव महापाशुपतानामाचार्यकृपाकटाक्षलब्धवेधादिदीक्षापादितसर्वाङ्गलिङ्गसाहित्यनिरस्तप्राकृततनुसम्बन्ध्याणवादिमलानां लिङ्गाङ्गस्थलतत्त्वैक्यानुसन्धानवतां कालपरिपाकाद् देहावसानेन सापिण्ड्यादिकमकर्तव्यमेव, प्रेतकृत्यत्वात्।

---

इन महापाशुपतों एवं मार्गशैवों में रहने वाली विशेषता यह है कि मार्गशैव अपने जीवनकाल पर्यन्त नित्य, नैमित्तिक आदि समस्त कार्यों का अनुष्ठान करते हुए यदि वे आहिताग्नि हैं और मरने से पहले प्राजापत्येष्टि से अग्नि का आत्मा में समारोप करके प्राण छोड़ते हैं, तो उनका निक्षेप होगा। यदि वे आहिताग्नि नहीं है, तो उनका शैवतन्त्र के अनुसार कर्म होना चाहिये। यदि वे अलिंगी हैं, जीवन काल पर्यन्त किये जाने वाले नित्य, नैमित्तिक आदि कर्मों को नहीं करते, तो दोष के पात्र बनेंगे। इसलिये सम्पूर्ण कर्मानुष्ठान का परिहार कर उन्हें संन्यासाश्रम का ग्रहण करना चाहिये।

## सापिण्ड्य ( श्राद्ध ) का निराकरण

महापाशुपत कहे जाने वाले लिंगांगी लोग श्रीगुरु से वेधा, मनु और क्रिया नामक तीनों दीक्षाओं को प्राप्त करके परिशुद्ध होकर, आचार्य के कृपाकटाक्ष से सर्वांगलिंग से सम्बन्धित होकर, शरीर सम्बन्धी आणव, मायीय और कार्मिक नामक बन्धन के हेतुभूत तीनों मलों से निर्मुक्त होकर, लिंगस्थल एवं अंगस्थलों के तत्त्वानुसन्धाता होकर, लिंगानन्द रूपी वैभव से युक्त होकर रहते हुए काल के परिपाक से, जब स्थूल देह को छोड़ देते हैं, तो ऐसे लोगों की आत्मा में प्रेतत्व दोष के न होने से इनके लिये सापिण्ड्यादि कर्मों को नहीं करना चाहिये।

इदं हि सापिण्ड्यकरणे प्रयोजनम्—पित्रादीनां देहत्यागे प्रेतत्वनिर्वृत्तिं विना तेषां पितृलोकप्राप्त्यभावेन तद्द्वारा मुक्त्यभावेन च तन्निवृत्त्यर्थम्—"चतुर्थस्य निवृत्त्यर्थं प्रेतत्वस्य निवृत्तितः। पिण्डसंयोजनादूर्ध्वं चतुर्थो विनिवर्तते ॥" इति वचनानुरोधेन द्वादशेऽहनि दीर्घप्रेतपिण्डं त्रेधा विभज्य क्लृप्त-देवतात्ववति पितामहादिपिण्डत्रयेण संयोजने प्रेतोदकस्य तदुदकेन सह संयोजनेन च प्रेतत्वनिवृत्तिर्भवति। तस्य च वृद्धप्रपितामहस्थाने प्रवेशात् तन्निवृत्तिरपीति।

एवं सति पूर्वतन्त्रे—"तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेत्", प्राजापत्यां प्रजापतिदेवताकां शत-

---

शिवलिङ्गाङ्गसङ्गिषु दहनकृत्यं निरस्य शिवसायुज्यं प्राप्तवतां तेषां प्रेत-त्वाभावाभिप्रायेण प्रेतत्वनिवृत्तिभूतसापिण्ड्यादिकमपि न कर्तव्यमित्युप-पादयत्यग्रिमग्रन्थेन। अत्रैव पूर्वतन्त्रस्य दशमाध्यायस्थं कृष्णलेष्ववघात-बाधाधिकरणमुपष्टम्भकतयोपन्यस्यति—एवं सतीति। विकृतिप्रकरणे एवं श्रूयते—"तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेत्" इति। अत्र

प्रेतत्वनिवृत्तिपूर्वक पितृलोककी प्राप्ति ही सापिण्ड्यादि कर्मों का प्रयोजन है। इसके अतिरिक्त उन कर्मों का और कोई प्रयोजन नहीं है। इसी अभिप्राय को लेकर पूर्व-मीमांसा में अवघातन्याय प्रवृत्त है। वहां विकृति प्रकरण में कहा गया है कि प्रजापति देवता से सम्बद्ध सुवर्णमय तण्डुल ( चावल ) के चरु ( खीर ) का हवन करना चाहिये। यहां सुवर्ण के चावल से चरु नहीं बन सकता, इसलिये सोने के रंग के चावल से हवन करना चाहिये, ऐसा विधान किया गया है। यह याग दर्शपूर्णमासेष्टि याग का विकृति याग होने से और "प्रकृतियाग की तरह विकृतियाग को भी करना है" ऐसा श्रुति का निर्देश होने से दर्शपूर्णमासेष्टि में "व्रीहीनवहन्ति" ( धान को उलूखल में कूट कर छिलके निकालने चाहिये ) इस वाक्य में आये हुए अवहनन (कूटना) की शतकृष्णल (सोने के रंग वाले चावल) में प्रसक्ति होने से और अवहनन का प्रयोजन ऊपर के छिलके को निकालना मात्र होने से तथा सुवर्ण तण्डुलरूप शतकृष्णल नामक चावल में उस प्रकार का छिलका न होने

कृष्णलां सुवर्णशकलां महोमेतां चरुं निर्वपतीत्यत्र दर्शपूर्ण-मासप्रकृतिकेष्टिविशेषे पुरोडाशविशेषोपयोगिसुवर्णशकलेष्वव-वहननं कर्तव्यं न वेति विशये दर्शपूर्णमासिकेषु व्रीहिषु "व्रीहीनवहन्ति" ( आप० श्रौ० १।१९।११ ) इत्यनेनावहननस्य प्राप्तत्वेन—"प्रकृतिवद् विकृतिः कर्तव्याः" इति चोदकवशात् सुवर्णशकलेष्ववहननं कर्तव्यमेवेति पूर्वपक्षे, अवहननस्य तुषनिवृत्तिद्वारा तण्डुलनिष्पत्त्युपयोगित्वेन व्रीहिषु तुषनिवृत्त्यर्थमवहननप्रसक्तावपि सुवर्णशकलेषु द्वारभावेन नावहननप्रसक्तिरिति सिद्धान्तितत्वेन प्रकृते परशिवैक्यप्राप्तिमतां महापाशुपतानां लिङ्गधारिब्राह्मणानाम्—"काश्यां मृतानां सर्वेषां यतीनां लिङ्गधारिणाम् । देवत्वमेव भवति पितृत्वं नैव विद्यते ॥" इति स्कान्दपुराणोक्त्या प्राकृतजनवत् प्रेतत्वा-

---

सुवर्णमयस्तण्डुलः कृष्णलपदेनोच्यते। सुवर्णमयश्चरुरस्यामिष्टौ विधीयते। अस्या इष्टेर्दर्शपूर्णमासविकृतितया प्रकृतिवद् विकृतिः कर्तव्येति चोदकवाक्येन दर्शपूर्णमासेतिकर्तव्यताया अतिदेशाद् व्रीहीनवहन्तीति वाक्यविहितस्यावघातस्य कृष्णलेऽपि प्रसक्ताववघातस्य तुषविमोकफलकतया सुवर्णशलाकात्मककृष्णलेषु तुषाभावेन प्रयोजनाभावादवघातो बाध्यते, तद्वदिहापि शिवसायुज्यवतां लिङ्गाङ्गसङ्गिनां प्रेतत्वाभावेन प्रयोजनाभावात् सापिण्ड्यादिकं नास्तीति भावः। अत एव स्कन्दपुराणे—"काश्यां मृतानां

से अवघात का बाध होता है। उसी प्रकार प्रकृत में शिवसायुज्य को प्राप्त किये हुए महापाशुपत नामक लिंगांगियों के लिये प्रेतत्व ही जब नहीं रहता, तब इस प्रेतत्व के निवारण के साधनस्वरूप सापिण्ड्यादि कर्मों का अपने आप बाध हो जायगा।

इसके अलावा "काशी में जो मर जाते हैं, जो संन्यासी हैं और जो लिंगधारी हैं, वे परमेश्वर ही हो जाते हैं, पितृत्वभाव को प्राप्त नहीं होते" ऐसा स्कन्दपुराण में कहा गया है। अतः अलिंगियों को प्राप्त होने वाले प्रेतत्व की लिंगधारियों को प्राप्ति न होने से उस प्रकार के प्रेतत्व के निवारक श्राद्धान्तर्गत सापिण्ड्यादि

भावेन "प्रसक्तं हि प्रतिषिध्यते" इति न्यायेन प्रत्यवायाभावे तन्निवर्तकप्रायश्चित्तकरणे प्रयोजनाभावात् तत्प्रेतत्वनिवर्तक-सापिण्डयादिकरणे प्रयोजनाभाव एव ।

ननु लिङ्गाङ्गिब्राह्मणानां देहावसाने प्रेतत्वाभावेऽप्यविद्या-कल्पितजीवभावसद्भावेन तन्निवृत्तिं विना मृतपुरुषस्येश्वरसदा-शिवपरमशिवस्वरूपतत्पितृपितामहप्रपितामहैः सहैक्यासम्भवेन वर्ग-त्रयप्रवेशाभावात् तत्पुत्रस्य वृद्धप्रपितामहनिवृत्त्यभावेन वर्ग-त्रयोद्देश्यकमासिकादिश्राद्धकरणप्रवृत्तिर्न स्यादिति चेत् ? आक-र्ण्यतां सावधानेन—"चतुर्थस्य निवृत्त्यर्थं जीवभावनिवृत्तितः ।

---

सर्वेषां यतीनां लिङ्गधारिणाम् । देवत्वमेव भवति पितृत्वं नैव विद्यते ॥"
इति पठ्यते ।

वृद्धप्रपितामहनिवृत्त्यभावेनेति । अयमत्राशयः प्रतिभाति—मृतपुरुषस्य प्रेतत्वजीवभावोभयनिवृत्तावपीश्वरसदाशिवपरमशिवस्वरूपतत्पितृपितामहप्र-पितामहैः सहैक्यप्राप्तौ क्रियाकर्तुः पुत्रस्य पितरमादाय पितृत्रयत्वोपपत्तौ वृद्धप्रपितामहस्तस्माद् वर्गात् पृथग् भवति । ततः प्रभृति च स जीवन् पुरुषः स्वपितृपितामहप्रपितामहानामेव श्राद्धं करोति, वृद्धप्रपितामहं तद्दले न प्रवेशयति । तस्य मृतस्य जीवभावानिवृत्तौ त्वीश्वरसदाशिवपरमशिवात्मक-पुरुषत्रयैक्यासम्भवेन वृद्धप्रपितामहस्य तस्मात् पृथग्भावाभावेन जीवत्पुरु-षस्य स्वपितृपितामहप्रपितामहोद्देशेन श्राद्धप्रवृत्तिर्न स्यात्, तादृशवर्गस्यैवा-सिद्धेरिति समाधत्ते—चतुर्थस्य निवृत्त्यर्थं जीवभावनिवृत्तितः । तत्त्वादियो-

कर्मों का कोई प्रयोजन न होने से लिंगांगियों के लिये उन कर्मों के आचरण की कोई आवश्यकता नहीं है ।

### तत्त्वसंयोजन की आवश्यकता

वास्तव में प्रेतत्व न होने पर भी अविद्याकल्पित जीवभाव होने से उस जीवभाव की निवृत्ति के लिये पिता, पितामह और प्रपितामह स्वरूप ईश्वर, सदा-शिव और परमशिव को निमित्त बनाकर तत्त्व का संयोजन करना चाहिये । इस सन्दर्भ में मकुटागम में कहा गया है कि तत्त्वयोजन प्रक्रिया से परशिवस्थान में रहने वाले वृद्धप्रपितामह आदि मुक्ति को प्राप्त करते हैं । यहाँ तत्त्व पद से वीर-

तत्त्वादियोजनादूर्ध्वं चतुर्थोऽपि निवर्तते ॥" इति मकुटागमोक्तप्रकारेणोभयनिवृत्तिः। तथाहि—तत्त्वादियोजनादूर्ध्वमित्यत्र तत्त्वशब्देन षट्त्रिंशत्तत्त्वानाम्, आदिशब्देन अष्टात्रिंशत्कलानां च ग्रहणं भवति। तथा च मृतपुरुषस्यैकादशेऽह्न्येकोद्दिशेन षोडशादिकं निर्वर्त्य द्वादशेऽहनि संप्राप्ते मृतपुरुषमेकस्मिन्नावाह्य तत्पितृपितामहप्रपितामहानीश्वरसदाशिवपरशिवस्वरूपांस्त्रित्वसंख्यातमाहेश्वरेष्वावाह्य च शिवमहेश्वरसदाशिवपरशिवस्वरूपपितृपितामहप्रपितामहवृद्धप्रपितामहाधिष्ठितषट्त्रिंशत्तत्त्वान्यष्टात्रिंशत्कलाश्च तत्समसंख्याकमाहेश्वरेष्वभावपक्षे केषुचिद्वा ॐ हां पार्थिवतत्त्वमावाहयामि, ॐ हां जलतत्त्वमावाहयामि, ॐ हां तेजस्तत्त्वमावाहयामि, ॐ हां वायुतत्त्वमावाहयामीत्यादिना पृथिवीतत्त्वमारभ्य शिवतत्त्वपर्यन्तम्, [1]ईशानः सर्वविद्यानां शशिनीमावाहयामि, ईश्वरः सर्व-

---

जनादूर्ध्वं चतुर्थोऽपि निवर्तते ॥ इति। अयमर्थः—षट्त्रिंशत्तत्त्वानामष्टात्रिंशत्कलानां वक्ष्यमाणप्रकारेण योजनोत्तरं जीवभावनिवृत्तौ सत्यां चतुर्थो वृद्धप्रपितामहोऽपि निवर्तते तस्माद्वर्गात् पृथग्भवति। एतत्प्रकरणार्थस्य वास्तविकं तत्त्वं मकुटागमदर्शनेनैव निर्द्धारयितुं शक्यत इत्युपरम्यतेऽधिकलेखात्। त्रित्वसंख्यातमाहेश्वरेषु ईश्वरसदाशिवपरमशिवतादात्म्येन कल्पितेषु त्रिषु वीरशैवब्राह्मणेष्वित्यर्थः। केषुचिद्वेति श्राद्धकाले वीरशैवानामलाभपक्षे

शैव सिद्धान्त के अनुसार छत्तीस तत्त्वों का और आदि पद से अड़तीस कलाओं का ग्रहण किया जाता है। लिंगांगी मृत पुरुष के निमित्त ग्यारहवें दिन की जाने वाली जो माहेश्वर पूजा है, उसमें एकादश रुद्र की आराधना करने के बाद बारहवें दिन पिता, पितामह और प्रपितामह स्थानापन्न ईश्वर, सदाशिव और शिवस्वरूप तीन माहेश्वरों में "ॐ हां पार्थिवतत्त्वमावाहयामि, ॐ हां जलतत्त्वमावाहयामि, ॐ हां तेजस्तत्त्वमावाहयामि, ॐ हां वायुतत्त्वमावाहयामि" इस प्रकार पृथिवी तत्त्व से लेकर शिवतत्त्व पर्यन्त छत्तीस तत्त्वों को और "ईशानः सर्वविद्यानां

---

१. ईशान इत्यादिकः सम्पूर्णो मन्त्रस्तैत्तिरीयारण्यके (१०।४७।१) द्रष्टव्यः।

भूतानामङ्गदामावाहयामि, ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माधि-ष्ठामावाहयामि, ब्रह्मा शिवो मे अस्तु मरीचिमावाहयामि, सदाशिवो ज्वलिनीमावाहयामीत्यादिना शशिनीकलामारभ्य स्थित्याख्यकलापर्यन्तं साक्षतबिल्वदलैरावाहयेत् । ततश्च तत्त्व-कलास्वरूपमाहेश्वराणां ब्राह्मणानां विष्टरप्रदानादिपूर्वकं पादार्चनादिकं कृत्वा मे पितुः सर्वजीवभावनिवृत्तिद्वारा शिव-महेश्वरसदाशिवस्वरूपपितृपितामहप्रपितामहैक्यप्राप्त्यर्थं सा-क्षतबिल्वदलैस्तत्त्वकलासंयोजनं करिष्य इति संकल्पं कुर्यात् । अथ च ॐ हां पार्थिवतत्त्वं संयोजयामि, ॐ हां जलतत्त्वं संयोजयामि, ॐ हां तेजस्तत्त्वं संयोजयामि, ॐ हां वायुतत्त्वं संयोजयामि, ॐ हां आकाशतत्त्वं संयोजयामीत्यादिना शिव-तत्त्वपर्यन्तं षट्त्रिंशत्तत्त्वानाम्, ईशानः सर्वविद्यानां शशिनी-कलां संयोजयामि, ईश्वरः सर्वभूतानाम् अङ्गदां संयोजयामि,

---

सामान्यशैवेष्वित्यर्थः । जीवभावनिवृत्तिद्वारेति । अत्र माहेश्वरब्राह्मणेषु प्रदर्शितमन्त्रे पृथिव्यादितत्त्वानां शशिन्यादिकलानां चावाहनं कृत्वा तत्संनिधिस्थापितावाहितमृतपुरुषके शैवपुरुषे तत्त्वानामुक्तकलानां च पुनः प्रदर्शितैः संयोजयामीत्यन्तमन्त्रैः संयोजने कृते जीवभावनिवृत्तिपूर्वकपितृत्व-

शशिनीमावाहयामि, ईश्वरः सर्वभूतानाम् अङ्गदामावाहयामि, ब्रह्माधिपतिर्ब्रह्मणोऽ-धिपतिर्ब्रह्माधिष्ठामावाहयामि, ब्रह्मा शिवो मे अस्तु मरीचीमावाहयामि, सदाशिवो ज्वलिनीमावाहयामि'' इस क्रम से शशिनी से लेकर स्थिति कला पर्यन्त कलाध्व में बताई गई अड़तीस कलाओं का अक्षतों से विशिष्ट बिल्व-दलों से आवाहन करने के बाद तत्त्वस्वरूप तथा कलास्वरूप उन माहेश्वरों के लिये आसन, पाद्य, अर्घ्य और आचमन आदि को शास्त्रानुसार समर्पित करके पादप्रक्षालनपूर्वक षोडशोप-चार पूजा करके संकल्पपूर्वक अक्षत-बिल्वदलों से ॐ हां पार्थिवतत्त्वं संयोज-यामि, ॐ हां जलतत्त्वं संयोजयामि, ॐ हां वायुतत्त्वं संयोजयामि, ॐ हां आकाश-तत्त्वं संयोजयामि'' इस प्रकार कहते हुए छत्तीस तत्त्वों को तथा ''ईशानः सर्व-विद्यानां शशिनीं संयोजयामि, ईश्वरः सर्वभूतानामङ्गदां संयोजयामि, ब्रह्माधिपति-

ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माधिष्ठां संयोजयामि, शिवो मे अस्तु मरीचिं संयोजयामि, सदाशिवों ज्वलिनीं संयोजयामीत्यादिना [1]पञ्चब्रह्ममन्त्रैः शशिनीकलामारभ्य स्थितिकलापर्यन्तमष्टात्रिंशत्कलानां च संयोजने कृते मृतपुरुषस्य जीवभावनिवृत्तिद्वारा शिवमहेश्वरसदाशिवस्वरूपतत्पितृपितामहप्रपितामहैक्ये यजमानस्य वृद्धप्रपितामहनिवृत्त्या वर्गत्रयोद्देश्यकमासिकादिश्राद्धकरणप्रवृत्तिसिद्धिर्भवतीति ।

अथ मार्गशैवानां गुरुकृपालब्धदीक्षासमये क्रियादीक्षान्तर्गतस्वस्तिकारोहणाख्यदीक्षया शिष्यजननीगर्भजातमांसपिण्डनिवृत्त्यर्थमापादमस्तकपर्यन्तं संहारक्रमेण षडध्वन्यासानन्तरं

प्राप्तिः, वृद्धप्रपितामहस्य तद्वर्गात् पृथग्भावश्च भवतीति शैवागमप्रक्रिया । यावदेतत्तत्त्वावगमस्तु कामिकागमवातुलागममकुटागमानां सम्यगवलोकनेनैव भविष्यतीति तत एव करणीयः ।

अथ मार्गशैवानामिति । तेषां गुरुकृपालब्धदीक्षावत्त्वेन स्वत एव शिवैक्यप्राप्ततया क्रियादीक्षान्तर्गतस्वस्तिकारोहणाख्यदीक्षया जननीगर्भदोष-

ब्रह्मणोऽधिपतिर्ब्रह्माधिष्ठां संयोजयामि, शिवो मे अस्तु मरीचिं संयोजयामि, सदाशिवों ज्वलिनीं संयोजयामि'' इस प्रकार पाँच ब्रह्ममन्त्रों से शशिनी से लेकर स्थिति पर्यन्त अड़तीस कलाओं को जोड़ने के बाद मृत पुरुष का जीवभाव निवृत्त हो जाता है। पिता पितामह और प्रपितामह स्वरूप ईश्वर, सदाशिव और शिव नामक विशुद्ध तत्त्व निवासी होकर बाद में वह इन तत्त्वों से भी निर्मुक्त होकर शिवसायुज्य को प्राप्त हो जाता है। इसके बाद वर्गत्रय के निमित्त मासिक श्राद्ध आदि के रूप में महेश्वराराधना का क्रम से सम्पादन करते रहना चाहिये ।

**शंका**—श्रीगुरु दीक्षा देते समय क्रियादीक्षा के अन्तर्गत स्वस्तिकारोहण नामक दीक्षा से शिष्य के मातृगर्भ से आये हुये मांसपिण्ड के अभिमान की निवृत्ति

---

१. सद्योजातं प्रपद्यामीत्यादयः पञ्च मन्त्राः पञ्चब्रह्मपदेनोच्यन्ते । ते च तैत्तिरीयारण्यके ( १०।४३-४७ अनुवाकेषु ) द्रष्टव्याः । पाशुपतसूत्रेषु प्रत्यध्यायसमाप्तौ त इमे समुद्धृता यथाक्रमम् ।

मन्त्रपिण्डोत्पत्त्यर्थं पुनरुत्पत्तिक्रमेण षडध्वन्यासकरणात् तत्कृततत्त्वकलासंयोजनादिना शिवैक्यकरणनिमित्ताभाव इति चेन्मैवम्, प्राग्दीक्षितस्यापि भक्तस्य भावनामात्रपिण्डसम्बन्धेऽपि "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" ( छा० उ० ६।१४।२ ) इत्यादिश्रुतिबोधितजीवन्मुक्तिदशापन्नस्येव पद्मपत्राम्भःसम्बन्धवदाविद्यकपाञ्चभौतिकदेहसम्बन्धस्यापि सत्त्वे तद्धारणप्रयोजकक्षुत्पिपासादिप्रसक्त्या रागद्वेषादिसम्भवेन च नित्यनैमित्तिकादिसकलकर्मानुष्ठानप्रयोजकब्राह्मणत्वाद्य-भिमानावश्यंभावेन च जीवभावानिवृत्तेः। क्रियादीक्षापरि-प्राप्तस्यापि पार्थिवरूपाभिभूतसुवर्णरूपस्येव प्राकृतिकजीव-

---

निवृत्त्यर्थं संहारोपपत्तिकर्मभ्यां षडध्वन्यासतत्त्वकलादियोजनानां निमित्ता-भावाद् नास्त्यपेक्षेति न मन्तव्यम्, तस्य जीवन्मुक्तदशापन्नत्वेऽपि पद्मपत्राम्भः-सम्बन्धवद् यथाकथञ्चिद् देहसम्बन्धस्यावश्यं सद्भावेन तत्प्रयुक्तक्षुत्पिपासा-

के निमित्त पादादि मस्तक पर्यन्त अंगों में संस्कार के क्रम से षडध्वन्यास करने के बाद मन्त्रपिण्ड की प्राप्ति के लिये फिर से उत्पत्ति क्रम से जब षडध्वन्यास करते हैं, तब मार्गशैव शिवस्वरूप हो ही जाता है, तो बाद में देहावसान में किये जाने वाले तत्त्व-कला संयोजन का क्या प्रयोजन है ?

**समाधान**—हाँ जी प्रयोजन है। ऐसा शिवभक्त पहले शिवदीक्षा को प्राप्त कर लेने पर भी भावना मात्र से मन्त्रपिण्ड से सम्बद्ध होकर "तस्य तावदेव चिरं यावन्न विमोक्षे अथ सम्पत्स्ये" इस प्रकार के श्रुतियों के वचन के अनुसार कमल के पत्ते पर गिरे हुये जल की तरह निर्लिप्त होकर रहने पर भी पाञ्च-भौतिक शरीर की उपस्थिति के कारण उसका भूख-प्यास तथा राग-द्वेष आदि से स्वाभाविक सम्बन्ध बना रहता है। अतः नित्य-नैमित्तिक आदि सम्पूर्ण कर्मानु-ष्ठान का प्रयोजक मताभिमान रह ही जाता है। पत्थर में मिला हुआ सोना जैसे भूसम्बन्ध से तिरस्कृत होकर अव्यक्त रहता है, वैसे ही मन्त्रपिण्डत्व को बनाने वाली क्रियादीक्षा के प्राप्त हो जाने पर भी प्रत्यक्ष में जीवभाव से तिरस्कृत रहने के कारण शिवभाव अव्यक्त ही रहता है। शरीर को छोड़ देने के बाद

भावाभिभूतत्वेनाव्यक्ततया देहावसानानन्तरं शिवमहेश्वरसदाशिवपरशिवस्वरूपतत्पितृपितामहप्रपितामहवृद्धप्रपितामहाधिष्ठिततत्त्वकलासंयोजनेनैक्यफलकाविद्यकजीवभावादिनिवृत्तौ परमकैवल्यापरनामकपरमशिवैक्याभिव्यक्तिसिद्धेरिति।

न च मांसपिण्डस्य दीक्षाकाल एव निवृत्तिरिति वाच्यम्, मन्त्रपिण्डोत्पत्तेरिव तन्निवृत्तेरपि भावनामात्रगम्यत्वात्। परन्तु वशिष्ठविश्वामित्रदुर्वासादिजीवन्मुक्तानामिव मार्गशैवानां पाञ्चभौतिकदेहसम्बन्धः पद्मपत्राम्भःसदृश एव, न तु प्राकृतजनशरीरसम्बन्धसदृश इति सुधीभिर्विमर्शनीयम्। मदुक्तार्थोपपादकानि तु वचनानि मकुटचन्द्रज्ञानवीरागमाद्यन्तर्गतपैतृकप्रकरणपठितान्यनुसन्धेयानि। कानिचिदुदाह्रियन्ते।

मकुटागमे—"गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतः।
द्विरेफकीटन्यायेन शिवैक्यं प्राप्तवान् द्विजः॥ लिङ्गाङ्गसङ्गिनि

---

देश्च सत्त्वेन शिवमहेश्वरसदाशिवपरशिवनिष्ठतत्त्वकलादियोजनाया जीवभावनिवृत्त्यर्थं शिवैक्यप्राप्त्यर्थं चावश्यकत्वादिति विमर्शनीयेत्यन्तग्रन्थाशयः। एतदन्तर्गतायां वशिष्ठविश्वामित्रेत्यादिपङ्क्तौ वशिष्ठादीनां नित्यसिद्धत्वेन कस्यापि कर्मणोऽपेक्षा नास्तीति सूच्यते।

स्वकृतसिद्धान्ते आगमवाक्यानि प्रमाणत्वेनोपन्यस्यति—गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगत इत्यादिना। शिवैक्यं जीवभावत इति। ल्यब्लोपे

पहले बताये हुए तत्त्वों और कलाओं के संयोजन से ही जीवभाव की निवृत्ति होती है और अव्यक्त शिवस्वरूप व्यक्त हो पाता है।

इस सन्दर्भ में मकुटागम में कहा गया है कि भ्रमर के चिन्तन से जैसे कीट भ्रमर ही हो जाता है, वैसे ही गुरु के द्वारा दीक्षित लिंगांगी जीव निरन्तर शिव का स्मरण करते रहने से शिवस्वरूप हो जाता है। इस प्रकार के लिंगांगी के मर जाने पर प्राकृत व्यक्तियों की तरह बारहवें दिन किये जाने वाले सापिण्ड्यादि कर्मों को न करके महेश्वर, सदाशिव और शिव के प्रतिनिधि व्यक्तियों को पिता, पितामह और प्रपितामह के स्थान पर

मृते सम्प्राप्ते द्वादशेऽहनि। सापिण्डयं नैव कर्तव्यं प्रेतत्वाभावतो मुनेः॥ दीक्षाकालपरिप्राप्तशिवैक्यं जीवभावतः। आविर्भूतमिति प्राहुः शैवागमविशारदाः॥ सदाशिवाद्यभिन्नेभ्यः पितृभ्यस्तत्त्वसंमिताः। कलाः संगृह्य चान्यत्र समभ्यर्च्य यथाविधि॥ जीवभावनिवृत्त्यर्थं मृतलिङ्गाङ्गसङ्गिनः। वर्गत्रयैक्यसिद्ध्यर्थं तत्त्वादीन् योजयेत् सुतः॥" इति, चन्द्रज्ञाने—"द्वादशेऽहनि सम्प्राप्ते मृतलिङ्गाङ्गसङ्गिनः। जीवभावनिवृत्त्यर्थं कुर्यात् तत्त्वादियोजनम्॥ लिङ्गाङ्गसङ्गिनि मृते सापिण्डादि न कारयेत्। तत्त्वसंयोजनादेव जीवभावो निवर्तते॥" इति, वीरागमे—"आत्मविद्याशिवाख्यानि तत्त्वानि च यथाक्रमम्। त्वंपदं चात्मतत्त्वं स्याद् विद्यातत्त्वमसीति च॥ तत्पदं शिवतत्त्वं स्यादात्मतत्त्वात्मकं पुनः। पञ्चविंशतिसंख्याकं दशतत्त्वात्मकं तथा॥ विद्यातत्त्वं शिवाख्यं स्यात् तत्त्वमेकमिति स्मृतम्। तत्त्वानामधिपो ज्ञेयो महेशश्च सदाशिवः॥ शिवः परात्परश्चैव

---

पञ्चम्यर्थे तसिल्। जीवभावं निवर्त्य दीक्षाकाललब्धं शिवैक्यं प्रादुर्भूतं भवतीत्यर्थः। तत्त्वसंमिता इति। चतुर्विंशतिसंख्याका इत्यर्थः। आत्मविद्याशिवाख्यानि तत्त्वानि च यथाक्रममिति तत्त्वानां त्रेधा विभागः क्रियते—आत्मतत्त्वम्, विद्यातत्त्वम्, शिवतत्त्वमिति। अत्र तत्त्वमसीति वाक्योत्पन्नविद्या विद्यातत्त्वमित्युच्यते। त्वंपदार्थ आत्मतत्त्वमित्युच्यते। तत्पदार्थः शिवतत्त्वमित्युच्यते। अत्रात्मतत्त्वं पञ्चविंशतिसंख्याकम्, विद्यातत्त्वं दशसंख्याकम्, शिवतत्त्वमेकसंख्याकम्। इमान्येव पूर्वोक्तानि

बिठाकर विधि के अनुसार पूजा करके छत्तीस तत्त्वों का और अड़तीस कलाओं का संयोजन करने से उसके जीवभाव की निवृत्ति हो जाती है।

इतना ही नहीं, चन्द्रागम और वीरागम में यही विषय विशद रूप से बताया गया है। पद्मपुराण में भी कहा गया है कि योगाभ्यास द्वारा दहराकाश में अन्तर्लिंग की उपासना करने वाले लिंगांगी के निमित्त सापिण्ड्य आदि प्रेतकार्य का कोई प्रयोजन नहीं है।

शिवे परमकारणे। दीक्षात्रयप्रकारेण गुरुणा दीक्षितो यथा ॥ तथैक्यस्य च भक्तस्य सापिण्ड्ये किं प्रयोजनम्। तस्मात् तत्त्वेश्वराः सम्यगर्चनीया यथाक्रमम्। द्वादशेऽहनि सम्प्राप्ते कल्याणे शिवयोगिनः ॥" इति। अत्र तत्त्वेश्वरा इत्यत्र तत्त्व-पदं कलानामप्युपलक्षणम्। एवं पिण्डतत्त्वकलारूपाणां तदधिष्ठानेश्वरादिरूपपितृणां चार्चनेन तत्त्वादिसंयोजनं कार्यमिति तात्पर्यमुन्नेयम्। पद्मपुराणे—"दहराकाशलिङ्गस्य सतो योगादि-लिङ्गतः। लिङ्गभावात्मकतया प्रेतकार्यादिकं नहि ॥" इति।

मतान्तराणामपि सापिण्ड्यादिकमनित्यमेव, पित्रादेराश्रमस्वीकारानन्तरभाविमरणप्रसक्तौ तेषां च प्रागुदाहृतशौनक-मन्वादिस्मृतिभिः पिण्डोदकादिनिषेधेन सापिण्ड्यकरणायोगात्। पितुर्गृहस्थत्वेऽपि पितामहादीनां संन्यस्तत्वे ब्रह्मीभूततया तदुद्देश्यकपिण्डाभावेन तत्र प्रेतपिण्डसंयोजनासम्भवेन च तत्रापि तदभावात्। परन्तु पितृपितामहादीनां सर्वेषां

---

षट्त्रिंशत्तत्त्वान्युच्यन्ते। एषामवान्तरनामानि ग्रन्थान्तरतोऽवसेयानि। तथैक्यस्य च भक्तस्येति। ऐक्यस्य शिवैक्यस्य, भक्तस्य श्रद्धयाऽऽत्मनि तदैक्यं भावयमानस्य। तस्मात् तत्त्वेश्वराः सम्यगर्चनीया इति। तत्त्वेश्वरा इत्यस्य तत्त्वेश्वरसदाशिवतादात्म्येन भाविता वीरशैवब्राह्मणा इत्यर्थः। कल्याणे शिवयोगिन इति। शिवयोगिनः कल्याणे मोक्षप्राप्त्युत्सवकाल इत्यर्थः। यद्वा निमित्तसप्तम्येषा। कल्याणेऽर्थात् कल्याणार्थम्। दहराकाश-लिङ्गस्येति हृत्पुण्डरीकान्तर्गतब्रह्मलिङ्गस्य सतः कालत्रयाबाध्यस्य योगादि-

अलिंगियों में पिता, पितामह आदि के क्रम से गृहस्थाश्रम को छोड़कर संन्यासाश्रम को स्वीकारने के बाद यदि कोई मर जाता है, तो केवल उसके लिये श्राद्ध, पिण्डोदक आदि का निषेध किया गया है। जो संन्यास न लेकर गृहस्थाश्रम में रहते हुये मर जाते हैं, उन लोगों के निमित्त सापिण्ड्यादि का विधान है। इस तरह से सापिण्ड्यादि को प्राप्त होने वाले अनित्यत्व दोष का कोई परिहार नहीं कर सकता।

गृहस्थानामेव यत्र मरणप्रसक्तिस्तत्रैव सापिण्डचकरणमित्यनित्यत्वं दुर्वारमेव ।

यद्यपि—"न च श्राद्धादिकं कर्म न पिण्डं नोदकक्रिया । न कुर्यात् पार्वणादीनि शिवलिङ्गाङ्गसङ्गिने ।। प्रत्यब्दं तु तमुद्दिश्य शिवभक्तांश्च भोजयेत् । भक्तेभ्यो दत्तमन्नं यत् तदेव च शिवाय हि ।।" इति श्राद्धमात्रनिषेधवचनम्, तत्तु—"अत्याश्रमी प्राणलिङ्गसम्बन्धिभस्मघटकां कन्थां कमण्डुलं भिक्षापात्रं दण्डं च धारयेत् ।।" इति वचनावगतनित्यनैमित्तिकादिकर्मपरिहारपूर्वकत्यक्तदारपुत्रादिनिराभारवीरशैवपरमित्यवगन्त-

---

लिङ्गतः समाधिप्रकारैः । लिङ्गभावात्मकतया शिवलिङ्गरूपत्वं प्राप्ततया । अनित्यत्वं दुर्वारमिति । संन्यासाश्रमं गृहीतवतां पित्रादीनां सर्वमत एव सापिण्ड्यस्याकरणादेवं मन्यते ।

निराभारवीरशैवपरमिति । अन्यथा तत्त्वकलायोजनाकर्तव्यतापरमकुटागमवीरागमस्थोदाहृतवाक्यविरोधापत्तेः । तस्मान्निर्गत आभारः सांसा-

**जंगमाराधन का विधान**

लेकिन वीरशैव सिद्धान्त के अनुसार शिवलिंगधारियों में अत्याश्रमी के मृत होने पर श्राद्धकर्म, पिण्डोदक और पर्वों में किये जाने वाले कृत्य नहीं किये जा सकते । प्रतिवर्ष एक बार उन निराभारियों के निमित्त शिवभक्त जंगमों को भोजन करा देना चाहिये । शिवभक्तों को तृप्ति के निमित्त दिये हुये अन्न से साक्षात् भगवान् शिव तृप्त हो जाते हैं । इस प्रकार निराभारी वीरशैव के लिंग-देह को छोड़ देने के बाद किये जाने वाले कर्तव्यों को बतलाकर जीवितावस्था में उसका आचरण कैसा रहे, इसका वर्णन करते हुए कहा गया है कि बगल में भस्म का झोला, शरीर में गुदड़ी, पीठ पर कमण्डलु, एक हाथ में दण्ड और दूसरे हाथ में भिक्षापात्र —इन पाँच मुद्राओं को धारण करके ब्रह्मचारी, गृहस्थ आदि के निमित्त निर्दिष्ट सभी धर्मों को छोड़कर "निर्गत आभारो (सांसारिकचिन्ताभारः) यस्मात् स निराभारः" इस व्युत्पत्ति के अनुसार पुत्र, पत्नी आदि की सम्पूर्ण सांसारिक चिन्ताओं को छोड़कर षडंगों में षट्लिंगों का जिसने साक्षात्कार कर लिया है, उसी को निराभारी कहा जाता है । इस प्रकार के निराभारी वीरशैव जब अपने लिंगदेह को छोड़ देते हैं,

**व्यम् । गृहस्थानां शिवज्ञानैकनिष्ठानां लिङ्गाङ्गिनां विशेषवीर-शैवानां तु प्रेतकृत्यपिण्डाद्ययोगेऽपि—"लिङ्गाङ्गसङ्गिनि मृते निक्षिपेदुत्तरक्रियाम् । कुर्वीरन् शैवतन्त्रोक्तां शिष्यपुत्रादयो गृहे ॥" इति शङ्करसंहितावचनानुरोधेन स्वगृह्योक्तप्रकारेण सर्वमप्यवसानकृत्यं कर्तव्यमेवेति सर्वं समञ्जसमिति ॥**

---

रिकचिन्तारूपो यस्मात् तादृशो यो वीरशैवः, तत्परमेव श्राद्धमात्रनिषेध-वचनं मन्तव्यम्, तेषां निरतिशयकल्याणरूपशिवनिष्ठतया बाह्यक्रियान-पेक्षणात् । इति शिवम् ॥

शिवेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
मङ्गलानि समग्राणि करस्थान्येव तस्य तु ॥
शिवस्वरूपं देवं तं देवीं तां सर्वमङ्गलाम् ।
ध्यात्वा कथञ्चिन्मनसि प्रणमामि पुनः पुनः ॥

प्राप्ते व्योमरसाङ्कचन्द्रगणिते ( १९६० ) श्रीवैक्रमे वत्सरे
ग्रीष्मर्तौ शुचिशुक्लगाष्टमतिथौ वाणोशितुर्वासरे ।
काशीजङ्गमवाटिकोन्नतमठे सिंहासनाधिष्ठितः
श्रीराजेश्वरविद् व्यधापयदिमां व्याख्यां शरन्नामिकाम् ॥

तो उनके निमित्त विधि के अनुसार समाधि क्रिया का सम्पादन करके किसी प्रकार की पिण्डोदक आदि अपर क्रियाओं को न करते हुए प्रतिवर्ष एक बार शिवभक्त माहेश्वरों के लिये अन्नसन्तर्पण ( भण्डारा ) करने का जो विधान है, उसका अवश्य ही निर्वाह करना चाहिये ।

गृहस्थाश्रमी होते हुए जो शिवज्ञानसम्पन्न लिंगांगी माहेश्वर भक्त है, उसके अपने लिंगदेह को छोड़ देने पर उस लिंगदेह के निमित्त बताई गई विधि से खननादि क्रियाओं का यथाविधि सम्पादन करके पितृलोकसाधक पैतृक सापिण्ड्यादि कोई भी अपर कर्म को न करते हुए शंकरसंहिता में बताये क्रम से लिंगांगी के मृतदेह का क्रमपूर्वक निक्षेप करके वातुलागम, मकुटागम, चन्द्रज्ञानागम, वीरागम और पारमेश्वरागम आदि में निर्दिष्ट प्रकार से तथा अपने-अपने परिवारों में प्रचलित नियम के अनुसार भूमि से शिव पर्यन्त छत्तीस तत्त्वों का, शशिनी से स्थिति पर्यन्त अड़तीस कलाओं का; पिता, पितामह, प्रपितामह के सदृश ईश्वर, सदाशिव और शिव स्वरूप तीन माहेश्वरों का उनके निमित्त निर्दिष्ट मन्त्रों से आवाहन करके

**इति श्रीमद्वेदवेदान्तस्मृतिपुराणागमेतिहाससकलशास्त्र-प्रसिद्धश्रीमद्वीरशैवविशिष्टाद्वैतविद्याचार्यपाषण्डाब्जमहागजपाञ्चरात्रप्रालेयचण्डकिरणद्वैतकुम्भिकुम्भदलनरौद्रपञ्चाननश्रीमन्नन्दीश्वरकृतलिङ्गधारणचन्द्रिकायां द्वितीयो भागः ।**

**बसवेश्वरपौत्रेण महेशाचार्यसूनुना ।**
**नन्दीश्वरेण रचिता लिङ्गधारणचन्द्रिका ॥**

लिङ्गधारणचन्द्रिका सम्पूर्णा ।

शक्त्या विशिष्टस्य महेश्वरस्याद्वैतं प्रपञ्चे सकलेऽस्ति यत्तत् ।
अचीचकासंस्तु पुरा जनेभ्यः काश्मीरशैवागमतत्त्वविज्ञाः ॥
तदीयसिद्धान्तनिगूढतत्त्वं लोकोपकाराय निवेदयिष्यन् ।
प्राचीनगीर्भिः किल नन्दिकेशः चकार लिङ्गाश्रयचन्द्रिकां ताम् ॥

लग्ना दिव्यपदाम्बुजे भगवतः कारुण्यवारांनिधेः
श्रीशम्भोः कमलासनप्रभृतिभिः संपूज्यमानेऽनिशम् ।
वाक्यैः प्रीतिसमुद्भवं वितनुते लोकस्य गौरीश्वरे
शैवेष्टेष्वपि शङ्कितं विधुवतीत्यास्तेतरामादृता ॥
अस्या विश्वेशपादाब्जपरत्वं वीक्ष्य हर्षतः ।
व्याख्यां शिवकुमारोऽहमकार्षं तच्छुभास्त्वियम् ॥
शुभः शम्भुः शुभा गौरी शुभः शेषः शुभः शशी ।
शुभो गणपतिस्तस्माद् ग्रन्थोऽयं सर्वतः शुभः ॥

**श्रीक्षेत्रकाशीस्थमहामहोपाध्यायपण्डितशिवकुमारमिश्रविरचिता शरन्नाम्नो व्याख्या समाप्ता ॥**

षोडशोपचार से पूजा करके, अक्षत और बिल्व दलों से क्रमपूर्वक निर्दिष्ट मन्त्रों से अर्चन करते हुए पुनरावृत्तिरहित शिवसायुज्य सिद्धि को प्राप्त करा देना चाहिये ।

इस प्रकार वेद, वेदान्त, स्मृति, आगम, इतिहास आदि समस्त शास्त्रों में प्रसिद्ध वीरशैव शक्तिविशिष्टाद्वैत विद्या के महान् आचार्य, पाषण्ड ( स्मार्त ) रूपी कमल के लिये गजस्वरूप, पांचरात्र रूपी प्रालेय (धुन्ध) के लिये प्रचंड सूर्यसदृश, द्वैतवाद रूपी हाथी के मस्तक को रौंदने के लिये रौद्र सिंह के समान, श्रीमान् नन्दीश्वर ( शिवाचार्य ) विरचित लिंगधारणचन्द्रिका का द्वितीय भाग यहाँ समाप्त होता है । बसवेश्वर के पौत्र, महेशाचार्य के पुत्र, नन्दीश्वर ने इस लिंगधारणचन्द्रिका की रचना की है ।

——

# ग्रन्थग्रन्थकार-मतमतान्तरसूची

——

# संकेत-सूची

| | | | |
|---|---|---|---|
| अ. को. | अमरकोशः | धा. | धातुपाठः |
| अभि. | अभियुक्तवचनम् | ना. पु. | नारदीयपुराणम् |
| अ. शिखो. | अथर्वशिखोपनिषत् | नारा. अ. | नारायणाथर्वशिखोपनिषत् |
| अ. शिर. | अथर्वशिरउपनिषत् | नृ. उ. | नृसिंहतापनीयोपनिषत् |
| अ. सू. | अनुभवसूत्रम् | प. पु. | पद्मपुराणम् |
| अ. स्त. | अपराधस्तवः | प. स्मृ. | पराशरस्मृतिः |
| आ. पु. | आदित्यपुराणम् | ब. उ. | बह्वृचोपनिषत् |
| आ. श्रौ. | आपस्तम्बश्रौतसूत्रम् | बृ. उ. | बृहदारण्यकोपनिषत् |
| आ. स्मृ. | आङ्गिरसस्मृतिः | बृ. जा. | बृहज्जाबालोपनिषत् |
| ई. उ. | ईशावास्योपनिषत् | बो. स्मृ. | बोधायनस्मृतिः |
| ऋ. | ऋग्वेदः | ब्र. पु. | ब्रह्माण्डपुराणम् |
| ऋ. खि. | ऋग्वेदखिलपाठः | ब्र.पु.चि. | ब्रह्माण्डपुराणचिदम्बर-संहिता |
| ऐ. आ. | ऐतरेयारण्यकम् | ब्र. वै. पु. | ब्रह्मवैवर्तपुराणम् |
| क. सू. | कल्पसूत्रम् | ब्र. सू. | ब्रह्मसूत्रम् |
| कठो. | कठोपनिषत् | भ. गी. | भगवद्गीता |
| का. उ. | काठकोपनिषत् | म. आ. | मकुटागमः |
| कू. पु. | कूर्मपुराणम् | म. भा. | महाभारतम् |
| कै. उ. | कैवल्योपनिषत् | म. स्तु. | महिम्नस्तुतिः |
| कौ. श्रु. | कौषीतकिश्रुतिः | म. स्मृ. | मनुस्मृतिः |
| क्रि. पा. | क्रियापादः | मि. का. | मिश्रकारिका |
| गौ. स्मृ. | गौतमस्मृतिः | मी. सू. | मीमांसासूत्रम् |
| च. ज्ञा. | चन्द्रज्ञानागमः | मु. उ. | मुण्डकोपनिषत् |
| छा. उ. | छान्दोग्योपनिषत् | मै. उ. | मैत्रायण्युपनिषत् |
| त. वा. | तन्त्रवार्त्तिकम् | मै. सं | मैत्रायणीसंहिता |
| तै. आ. | तैत्तिरीयारण्यकम् | लि. पु. | लिङ्गपुराणम् |
| तै. उ. | तैत्तिरीयोपनिषत् | वा. आ. | वातुलागमः |
| तै. सं. | तैत्तिरीयसंहिता | वा. त. | वातुलतन्त्रम् |
| द. | दर्पणः (शिवाद्वैतदर्पणः) | | |

| | |
|---|---|
| वा. पु. | वायुपुराणम् |
| वाम. पु. | वामनपुराणम् |
| वा. रा. | वाल्मीकिरामायणम् |
| वा. सं. | वायवीयसंहिता |
| वि. पु. | विष्णुपुराणम् |
| वी. आ. | वीरागमः |
| व्या. नि. | व्यासनिरुक्तिः |
| श. ब्रा. | शतपथब्राह्मणम् |
| श. सं. | शङ्करसंहिता (स्कन्द-पुराणीया |
| शा. भा. | शाबरभाष्यम् |
| शा. स्मृ. | शातातपस्मृतिः |
| शि. ध. | शिवधर्मोत्तरम् |
| शि.ध.शा. | शिवधर्मशास्त्रम् |
| शि. पु. | शिवपुराणम् |
| शि. र. | शिवरहस्यम् |
| शौ. स्मृ. | शौनकस्मृतिः |
| श्रु. | श्रुतिः |
| श्वे. उ. | श्वेताश्वतरोपनिषत् |
| ष. स्मृ. | षडशीतिस्मृतिः |
| स उ. | सदानन्दोपनिषत् |
| सि. शि. | सिद्धान्तशिखामणिः |
| सि. शे. | सिद्धान्तशेखरः |
| सि. सा. | सिद्धान्तसारावली |
| सु. उ. | सुबालोपनिषत् |
| सू. सं. | सूतसंहिता |
| स्क. पु. | स्कन्दपुराणम् |
| ह. वं. | हरिवंशः |
| हं. उ. | हंसोपनिषत् |

## चन्द्रिकाधृतवचनानुक्रमणी

———

# चन्द्रिकाधृतलौकिकवैदिकन्यायसूची

——